चन्द्रालोको विजयतां शरदागम संभवः । हृद्यः कुवलयानन्दो मत्प्रसा[illegible]

॥ श्री रंगराजाध्वरीन्द्रवरद सूनोरप्पय-दीक्षितस्य [illegible]

# अथचन्द्रिकासहितकुवलयानन्दः



अमुं कुवलयानन्दमकरोदप्पयदीक्षितः । नियोगाद्वेंकटपतेर्निरु[illegible]

कु॰ नं॰ चं॰ टी॰ १

श्रीगणेशायनमः अनुचिन्त्यमहालक्ष्मींहरिलोचनचन्द्रिकाम् कुर्वेकुवलयानन्दसदलङ्कारचन्द्रिकाम् १

अमरीति अत्रचरणमेवपंकजमितिमयूरव्यंसकादिसमासाश्रयणात्परिणामालंकारः चरणेआरोप्यमाणस्य

विनादुरितदूरीकरणक्रियार्थत्वासंभवात् परिणामःक्रियार्थश्चेद्विषयीविषयात्मनेतितल्लक्षणात् नचपंकज

समासएवास्त्वितिशंक्यम् अमरीणांकवरीभारस्यकेशपाशस्यसंबधिनीसौगंध्यलोभात्तत्संसृष्टाया

ण्याभावात् तस्यपंकजगतत्वेनैवप्रसिद्धेरिति एतद्विशेषणावगतेनचपादपतनेनाभिव्यज्यमानागे

तिप्रेयोलंकारोपिबोध्यः १ परस्परेति प्राञ्चौपुरातनौजायापतीअर्थादुमामहेश्वरौस्तुमः किंभू

अमरीकबरीभारभ्रमरीमुखरीकृतम् दूरीकरोतुदुरितंगौरीचरणपंकजम् १ परस्परत

तरौप्राञ्चौजायापतीस्तुमः २ {

अयत्नाद्विनोपदेष्टृत्वाच्च तयापरस्परसंबंधिन्यास्तप

शब्दस्यक्रियाविनिमयविवक्षायांकर्मव्यतिहारेसर्वनाम्नोद्वेवाच्येइतिवार्तिकेनद्विर्भावअस

स्वादेशेचपरस्परशब्दव्युत्पत्तेः पार्वतीतपःसमृद्धिफलायितःपरमेश्वरःपरमेश्वरतपः

निरतिशयानंदइतितदुपमयापरस्परंपरमप्रेमास्पदत्वलक्षणःशृंगारोव्यज्यमानःसौभ

सहृदयैराकलनीयम् मातापितराविति

संप्रतिप्रतिपिपादयिषितानामलंकाराणांव्युत्पत्तेः स्वतोः पुरुषार्थतयाफलत्वायोगात्तस्यारसास्वादोपयिकत्वेन फलत्वं[illegible]ावतांप्रकृतग्रंथ[illegible]रत्तये
सूचयितुंश्रृंगाररसाधिदैवतंश्रीकृष्णंप्रतिरसास्वादानंदंप्रार्थयते उह्लासेति समुकुंदोमेमह्यंशश्वत्भवंशाश्वतिकंभग्नावरणतयासदाप्रकाशमानं
श्रेयोविगलितवेद्यांतरमानंदं रसोवैस इतिश्रुतेः रसपदाभिधेयंदिशतुददात्वित्यर्थः यथाश्रुते मुक्तिप्रार्थनायाः प्रकृतेऽसंगत्यापत्तेः सकः योधन्यैर्महा
महिमपुण्यशालिभिर्नारदादिमुनिभिर्योगकलयायोगकौशल्येनहृदयाब्जस्यउरसोमध्यवर्तिनोहृदयपुंडरीकस्यकोशंमुकुलंअधोमुखतयाविद्यमा
नंउह्लास्यरेचकप्राणायामेनोर्ध्वमुखंकृत्वाचिराद्बहुकालंयथारुचियथेच्छंगृह्यमाणोपिरामकृष्णाद्यभिमतमूर्तिध्यानगोचरीक्रियमाणोपिपरितः

उह्लास्ययोगकलयाहृदयाब्जकोशंधन्यैश्चिरादपियथारुचिगृह्यमाणः यःप्रस्फुरत्यविरतंपरिपूर्णरूपः श्रेयःसमेदिशतुशाश्वतिकंमुकुन्दः ३ अलंकारेषुबालानामवगाहनसिद्धये ललितःक्रियतेतेषांलक्ष्यलक्षणसंग्रहः ४

पूर्णरूपमस्यतथाभूतोःपरिच्छिन्न
ब्रह्मरूपः अविरतंनिरंतरंमुक्तिदशायांस्फुरतिप्रकाशतइतिविरोधालंकारः औपासनिकरूपस्यकल्पितत्वेनचंतत्परिहारः अथवायोगिभिरप्यचि
न्त्यस्वरूपइतिमाहात्म्यातिशयवर्णनम् अत्रयोगिगतभगवद्विषयकरतिभावस्यकविगतंतंप्रत्यंगतयाप्रेयोलंकारः ३ चिकीर्षितस्यग्रंथस्य
जनाभिधेयेप्रदर्शयति अलंकारेष्विति एतच्चोभयान्वयि अलंकारेषुअर्थालंकारेषूपमादिषुविषयेबालानामव्युत्पन्नानांतेष्ववगाहनस्य
त्तेःसिद्धयइत्यर्थः तेषांयेलक्ष्यलक्षणेतयोःसंग्रहइतिनित्यसापेक्षत्वात्समासः लक्ष्यउदाहरणं अलंकारत्वंचरसादिभिन्नव्यंग्यभिन्नत्वेसति
न्यतरनिष्ठायाविषयितासंबंधावच्छिन्नाचमत्कृतिजनकतावच्छेदकतानदवच्छेदकत्वम् अनुप्रासादिविशिष्टशब्दज्ञानादुपमादिविशिष्टार्थज्ञा

कु॰ नं॰ चमत्कारोदयान्तेषु लक्षणसमन्वयः शब्दार्थयोर्ज्ञाननिष्ठचमत्कृतिजनकतायां विषयितयावच्छेदकत्वेन तद्विशेषणीभूतानुप्रासोपमादि

चं॰ टी॰ ष्ठावच्छेदकतावच्छेदकत्वात् रसवदाद्यलंकारसंग्रहाय व्यंग्योपमादिवारणाय च भेदद्वयगर्भसत्यन्तोपादानम् ४ परकीयग्रंथापहारशंका

२ याह येषामिति येषामलंकाराणां चंद्रालोके चन्द्रालोकाख्यग्रन्थे तएवेत्यनन्तरं लिख्यंत इति शेषः तत्रस्थितानां [illegible] चिदुलखनास्वा

कम् यथाऽनंतरश्लोकस्योत्तरार्द्धमुत्तत्रैवं दृश्यते हृदये खेलतोरुच्चैस्तन्वंगीस्तनयोरिवेति स्वयंत्वन्यदेव विरचितमिति [illegible] दीयतेन कथनादाशंका

निरासः ५ संप्रत्यर्थालंकारेषु निरूपणीयेषु बहलालंकारघटकतया सुप्रसिद्धतया च प्रथममुपमालंकारं लक्षयति उपमेति [illegible] शेष

येषां चंद्रालोके दृश्यंते लक्ष्यलक्षणश्लोकाः प्रायस्त एव तेषामितरेषां त्वभिनवा विरच्यंते ५ उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः हंसीव कृष्ण ते कीर्तिः स्वर्गगामवगाहते ६ यत्रोपमानोपमेययोः सहृदयहृदयाल्हादकत्वेन चारुसादृश्यमुद्भूततयोल्लसति व्यंग्यमर्यादां विनास्पष्टं प्रकाशते तत्रोपमालंकारः हंसीवेत्युदाहरणम् ३

लक्षणं सादृश्यलक्ष्मीश्चमत्कृतिजनकता तद्विशिष्टसादृश्यमिति यावत् धर्मधर्मिणोरभेदोपचारात् लक्षणं व्याचष्टे यत्रेति यत्र काव्ये इति त्वं सप्तम्यर्थः तच्च शक्तिलक्षणान्यतरसहकारेण बोधकत्वसंबंधेन उपमानमधिकरणं चंद्रादि उपमेयं वर्ण्यमानं कामिनीवदनादि सहृदयः काव्यभावनापरिपक्वबुद्धिः व्यंग्यस्य मर्यादा प्रतीतिनियमरूपा यया सा व्यंजनेत्यर्थः अत्रोपमानोपमेययोरिति स्वरूपकथनं न तु लक्षणान्तर्गतं व्यावर्तनीयाभावात् आत्माश्रयापादकत्वाच्च उपमानत्वोपमेयत्वयोरुपमाघटितत्वात् एतच्चाग्रे व्यक्तीभविष्यति इत्थं चालंकारत्वे सति सादृश्यत्वमुपमालंकारलक्षणं बोध्यम् एवमग्रेप्यधिकारप्राप्तमलंकारत्वं विशेषणं बोध्यम् हंसीत्यादि । २

अत्रतावदिवार्थेसादृश्येनिरूपितत्वसंसर्गेण हंस्यादेरन्वयः सादृश्यस्यप्रयोजकत्वसंसर्गेण स्वर्गगावगाहनाश्रयत्वरूपेसाधारण धर्मेतस्यचस्वरू
पसंबंधेनकीर्तौ सादृश्यस्यनिपातार्थतयानामार्थप्रति साक्षात्संबंधेनविशेष्यत्वेविशेषणत्वेचबाधकाभावात् तथाचहंसीनिरूपितसादृश्यप्रयोज
कस्वर्गगाकर्मकावगाहनाश्रयत्ववतीकीर्तिरितिबोधः नचैवंस्वर्गगावगाहनमिवशब्दश्चेत्याद्यग्रिमग्रंथेधात्वर्थस्यसमानधर्मत्वोक्तिर्विरुद्धेति
वाच्यम् तदाश्रयत्वस्यसमानधर्मत्वेतस्यतथात्वस्यौचित्यापातत्वेनविरोधाभावात् तथासतितत्रैवकुतोनसादृश्यान्वयइतिचेत् नधात्वर्थनिष्ठवि
शेष्यतानिरूपितप्रकारतासंसर्गेणशाब्दबोधेविशेष्यतयाविभक्त्यर्थोपस्थितेर्हेतुत्वात् नचनिपातार्थभिन्नवृत्तित्वेनप्रकारताविशेषणीयेतिवाच्यम् घ
टोनपश्यतीत्यादौघटाद्यन्विताभावस्यकर्मतासंसर्गेणदर्शनेन्वयापत्तेः यदितुधात्वर्थेपितात्पर्यवशात्सादृश्यान्वयोनुभवसिद्धस्तदाधात्वर्थनिष्ठवि
शेष्यतानिरूपितप्रकारतासंबंधेननान्वयबुद्धिंप्रतिनञ्जन्योपस्थितेः प्रतिबंधकत्वमात्रंपरिकल्प्यघटोनपश्यतीत्यादौपूर्वोक्तान्वयबोधोनिराक
रणीयइतिदिक् एवमरविंदमिवसुंदरवदनमित्यादावरविंदादिनिरूपितसादृश्यस्यप्रयोजकतासंसर्गेणसुन्दरपदार्थैकदेशेपिसुंदरत्वेऽनुभव
लादन्वयस्तद्विशिष्टस्यचाभेदेनमुखादौ इत्थंचारविंदनिरूपितसादृश्यप्रयोजकसौंदर्यवदभिन्नंवदनमित्यन्वयबोधः। अरविंदसुंदरमितिसमासे
त्वरविंदपदेनअरविंदनिरूपितसादृश्यप्रयोजकंलक्ष्यते। तच्चाभेदेनपदार्थैकदेशेसौंदर्येन्वेति। एवंचारविंदनि[illegible]प्रयोजकाभिन्नसौंद
र्यवदभिन्नंवदनमित्यन्वयबोधः एकदेशान्वयायोगादरविंदपदमेवलक्षणयासर्वार्थबोधकंसुंदरपदंतु[illegible]के अरविंदमिववद
नमित्यत्रारविंदनिरूपितसादृश्यवद्वदनमितिबोधः सादृश्यस्यनिपातार्थतयाभेदेननामार्थान्वयेबाधकाभावात् अरविंदमिवभातीत्यत्रभातेर्ज्ञाना
र्थकत्वेऽरविंदपदस्यअरविंदनिरूपितसादृश्यप्रकारकज्ञानविषयेलक्षणा तस्यचाभेदेनमुखादावन्वयः शेषंतात्पर्यग्राहकम् पूर्वोक्तदिशावासा
दृश्यस्यैवप्रकारितासंसर्गेणधात्वर्थेन्वयः अत्रैवसौंदर्येणेतिधर्मोपादानेतत्तीयार्थस्यप्रयोज्यत्वस्यसादृश्येन्वयात्सौंदर्यप्रयोज्यारविंदनिरूपितसा

कु॰ नं॰ चं॰ टी॰ ३

दृश्यप्रकारकज्ञानविषयइतिबोधः आद्यकल्पेतुअरविंदपदमेवसर्वार्थबोधकमितरत्तात्पर्यग्राहकमितिध्येयम् इयंचसादृश्यस्यपदार्थांतरत्वम
तेशाब्दबोधरीतिरुपदर्शिता तस्यसमानधर्मरूपत्वेतुचंद्रइवमुखमित्यादौचंद्रवृत्तिधर्मवन्मुखमितिबोधः अत्रैवाल्हादकमितिसमानधर्मोपादानेइ
वार्थस्यधर्मस्याल्हादकत्वेपदार्थैकदेशेऽन्वयः तदसहिष्णुतायांतुचंद्रनिष्ठाल्हादकत्ववति आल्हादकपदस्यलक्षणाचंद्रादिपदंतात्पर्यग्राहकम् चं
द्रसदृशमित्यत्राप्येकदेशेसादृश्येचंद्रान्वयःससंबंधिकत्वात् सदृशपदंवाचंद्रसादृश्यविशिष्टलाक्षणिकम् अत्रैवाल्हादकत्वेनेत्युक्तावभेदस्तृतीया
र्थस्तस्यचसदृशपदार्थैकदेशेधर्मेन्वयस्तथाचाल्हादकत्वाभिन्नचंद्रवृत्तिधर्मवदभिन्नंमुखमितिबोधः सदृशपदमेववासर्वार्थबोधकमितरत्तात्प
र्यग्राहकमित्येवंविधाअन्वयसरणिश्रेणयस्तत्रतत्रशब्दव्युत्पत्तिनिपुणैरनुसंधेयाइत्यलंप्रसक्तानुप्रसक्तपरिचिंतनेन ६ पूर्णोपमेतीत्यनंतरमा

इयंचपूर्णोपमेत्युच्यते हंसीकीर्तिःस्वर्गगावगाहनमिवशब्दश्चेत्येतेषामुपमानोपमेयसाधारणधर्मोपमावाचकानांचतुर्णा
मप्युपादानात् } लंकारिकैरितिपूरणीयम् तत्वंचविशेषतउपात्तशब्दशक्तिप्रतिपा
दितोपमानोपमेयकत्वेसतिविशेषतः शब्दोपात्तसमानधर्मकत्वेचसतिविशेषतः स्वनिरूढशब्दगम्यत्वम् स्वपदमुपमापरम् उपमानलुप्तायामपि
लक्षणयोपमानप्रतिपत्तेस्तद्वारणायशक्तीति उपमेयलुप्तायांस्मरवधूयंतीत्यादावात्मनउपमेयस्याध्याहृतेनात्मानमितिशब्देनबोधनादुपात्तेतिश
ब्दविशेषणम् एवमपितन्वीत्यनेनात्रोपमेयस्यकाव्यस्यसदृशेनसदृशेतइत्येवंविधायांलुप्तोपमानायामुपमानस्यचसदृशपदोपात्तत्वाद्विशेषतइ
ति उपमेयोपमानतावच्छेदकरूपेणेत्यर्थः धर्मलुप्तायामप्युपमावाचकेनसामान्यतोधर्मस्योपात्तत्वाद्विशेषतइति उपमाप्रयोजकतावच्छेदकरू
पेणेत्यर्थः वाचकलुप्तायामपिलक्षणयोपमानादिपदेनोपमावगमात्तद्वारणायविशेषतः स्वनिरूढेतिउपमायांचनिरूढा इववद्वायथाशब्दाइत्या॰ ३

थभियुक्तोक्तिसंगृहीताइवादयः अत्रनिपातरूपस्येवादेरुपसर्गवत्द्योतकत्वमेव कथमन्यथाशरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानि
वेत्यादावुस्रादिपदोत्तरतृतीयादिसंगतिः उस्रादेरुद्धरणक्रियांप्रत्यकरणत्वात् इवार्थसादृश्यान्वयित्वेनकरणीभूतशरविशेषणत्वाभावाच्च
द्योतकत्वेतूस्रादिपदयोस्त्रसदृशपरतयोस्त्रसदृशैः शरैरितिशरविशेषणत्वेनतृतीयादिसंगतिरितिवैय्याकरणमतंतुनादरणीयम् उपास्य
तेगुरुरित्यादौधात्वर्थासनक्रियायाअकर्मकतयाकर्मलकारानुपपत्तिरूपबाधकस्योपसर्गवाचकतायामिवेवादिवाचकतायामभावेनदृष्टान्त
वैषम्यस्यस्फुटत्वात् विशेषणविशेष्ययोः समानविभक्तिकतायाम् विशेष्येणसहैकार्थंभवेद्यत्रविशेषणम् तत्रलिङ्गादयःप्रायोविशेष्यस्याविशेष
णइत्यनुशासनस्येवोपमानोपमेययोरपितस्याम् लिंगसंख्याविभेदेपितुउपमानोपमेययता विभक्तिः पुनरेकैवउपमानोपमेययोरित्यनुशासन

यथावा गुणदोषौबुधोगृह्णन्निंदुक्ष्वेडाविवेश्वरः शिरसाश्लाघतेपूर्वंपरंकण्ठेनियच्छति ७

स्यसत्वेनोपमानपदोत्तरतृतीयादेः साधुत्वार्थतयोपपत्तेश्च तस्माद्द्योतकत्वमेवे—वादीनाम् युक्तंचैतत् अन्यथासकलालंकारिकसंमतस्येवशब्दप्रयो
गेश्रौतीत्वस्यरत्नजलांजलित्वापत्तेः रूढिप्रयोजनयोरन्यतरस्याभावेनचंद्रादिपदेनचंद्रसदृशलक्षणायांनिषिद्धलाक्षणिकत्वरूपनेयार्थत्वदोषापत्तेश्च
अपिचद्योतकत्वनयेचंद्रादेरुपमानस्यपदार्थैकदेशतयातत्रसाधारणधर्मान्वयानुपपत्तिरितिदिक् उपमानेत्यादि उपमानत्वंचोपमानिरूपकत्वेन
विवक्षितत्वम् तदाश्रयत्वेनविवक्षितत्वंचोपमेयत्वम् साधारणत्वंचधर्मस्यारसिकमौपचारिकंबिंबप्रतिबिंबभावकृतंश्लेषकृतंवस्तुप्रतिवस्तुभावेनसमास
भेदाश्रयणेनेत्यनेकधाचित्रमीमांसायांप्रपंचितम् तत्रस्वर्गगमवगाहनस्यतथात्वमौपचारिकंकीर्तौतस्यस्वारसिकत्वाभावात् उपादानादिति वाचकस्यो
पादानंनिर्देशः इतरेषांतुशब्देनप्रतिपादनंतदितिचिंतनीयम् ६ साधारणप्रकारविशेषोपदर्शनायोदाहरणांतरमाह यथावेति गुणदोषाविति गुण

जानन्

दोषावर्थोत्परस्य गृण्हन्बुधःपंडितःपूर्वंपूर्वनिर्दिष्टंगुणंशिरसाश्लाघते आंदोलितेनशिरसाअभिनंदयति परस्परतोनिर्दिष्टंदोषंकंठेनियच्छति निरुणद्धि वाचाकंठातबहिर्नोद्घाटयतीत्यर्थः कद्वद्दुःक्ष्वेडोचंद्रगरलेगृण्हन्नुपाददानईश्वरोहरइवसोपिहिपूर्वंचंद्रंशिरसाश्लाघते तत्पूर्वंकंधारये ति परंचगरलंकंठेनियच्छतिस्थापयतीति क्ष्वेडस्तुगरलंविषमित्यमरः ७ शंकते अत्रयद्यपीति साधारणस्तत्वेनाभिमतोधर्मः गृण्हन् शिरसाश्ला घतेपूर्वमित्यादिनोक्तोयद्यपिनैकोनसाधारणइतियोजना गृण्हन्नित्यादिनोक्तस्यकोपिधर्मःसाधारणोनेतिवा यथाश्रुतेसाधारणस्यसाधारणत्वाभा वोक्तेरसंगतत्वापत्तेः।साधारण्याभावेहेतुः उपमानइत्यारभ्यइतिभेदादित्यंतेनोक्तः समाधत्तेतथापीति वस्तुगत्यासाधारण्याभावेपीत्यर्थः।चंद्रग

अत्रयद्यपिउपमानोपमेययोर्नैकःसाधारणोधर्मः उपमानेईश्वरेचंद्रगरलयोर्ग्रहणमुपादानंतयोर्मध्येपूर्वस्यचंद्रस्यशिरसाश्ला घनंवहनंउत्तरस्यगरलस्यकंठेनियमनंसंस्थापनम् उपमेयेबुधेगुणदोषयोर्ग्रहणंज्ञानंतयोर्मध्येपूर्वस्यगुणस्यशिरसाश्लाघनं शिरःकंपेनाभिनंदनंउत्तरस्यदोषस्यकंठेनियमनंकंठादुपरिवाचाअनुद्घाटनमितिभेदात् तथापि चंद्रगरलयोर्गुणदोषयोश्च बिंबप्रतिबिंबभावेनाभेदादुपादानज्ञानादीनांगृण्हन्नित्येकशब्दोपादानेनाभेदाध्यवसायाच्चसाधारणधर्मे[illegible]हिशेषः

रलयोरित्यादियथाक्रमंचंद्रगुणयोर्गरलदोषयोश्चेत्यर्थः विंबप्रतिबिंबभावेनप्रतीयमानसादृश्ययोरुपमानोपमेयधर्मयोर्भिन्नशब्दोपात्तत्वरूपे अभेदात् अभेदाध्यवसायात् एतच्चसाधारणधर्मेत्यग्रेतनेनान्वितंज्ञानादीत्यादिनाशिरसावहनाभिनंदनयोःकंठस्थापनबहिरनुद्घाट नयोश्चसंग्रहः गृण्हन्नित्यादीत्यादिनाचशिरसाश्लाघतेकंठेनियच्छतीत्यनयोःसंग्रहः अभेदाध्यवसायादिति अभेदस्याध्यवसायादाहार्यनिश्च यादित्यर्थः साधारणधर्मेनेतीति साधारणधर्मत्वाभिमानविषयतेतीत्यर्थः। पूर्वस्मात्पूर्वोदाहरणात् इतिविशेषइत्यन्वयः नचैवंसाधर्म्यप्रती ४

त्युपपादानेपिवस्तुतस्तदभावात्कथमुपमालक्षणसमन्वयइतिवाच्यं चमत्कारविशेषप्रयोजकसाधारणत्वाध्यवसायविषयधर्मत्वस्यैवोपमाल
क्षणत्वमित्यभिप्रायादिति॥ लोकेबिम्बप्रतिबिम्बभावव्यपदेशस्यगगनजलाशयादिगतचंद्रादिविषयतयाप्रसिद्धेः कथंप्रकृतेतद्व्यपदेशइत्याशंका
यामाह वस्तुतइत्यादि अभिन्नयोः तथाध्यवसितयोः पृथगिति भिन्नशब्देनेत्यर्थः। बिंबप्रतिबिंबभावइति विंबप्रतिबिंबभाव[illegible]व्यमित्यर्थः। सम
यइति। संकेतइत्यर्थः पूर्णायामुपमानादिसमग्रतानियमप्रसिद्धेस्तद्विपरीतायांलुप्तोपमायांसर्वलोपनियमाशंकानिरासायलक्षणपूर्वकंताविभजते।

वस्तुतोभिन्नयोरप्युपमानोपमेयधर्मयोः परस्परसादृश्यादभिन्नयोःपृथगुपादानेबिंबप्रतिबिंबभावइतिआलंकारिकसमयः पूर्णो
पमानधर्माणामुपमावाचकस्यच एकद्वित्र्यनुपादानेर्भिन्नालुप्तोपमाष्टधा ८ तडिद्गौरींदुतुल्यास्याकर्पूरंतीदृशामम कांत्यास्मरवधू
यंतीदृष्टातन्वीरहोमया ९ यत्तयामेलनंतत्रलाभोमेयश्चतद्रतेः। तदेतत्काकतालीयमवितर्कितसंभवं १० उपमेयादीनांचतुर्णांमध्ये
एकस्यद्वयोस्त्रयाणांवाप्रतिपादकशब्दाभावेनलुप्तोपमेत्युच्यते साचाष्टधा यथा वाचकलुप्ता १ धर्मलुप्ता २ धर्मवाचकलुप्ता ३ वाच
कोपमेयलुप्ता ४ उपमानलुप्ता ५ वाचकोपमानलुप्ता ६ धर्मोपमानलुप्ता ७ धर्मोपमानवाचकलुप्ताचेति ८॥ तत्रोपमानलोपरहिताश्च
त्वारोभेदास्तडिद्गौरीत्यादिश्लोकेनप्रदर्शिताः तद्भूतोभेदाउत्तरश्लोकेनदर्शिताः॥ ११ वर्णेत्यादिना चकारोवाशब्दार्थे तदनंतरंचलोपेइत्यध्या
हार्यं एवंचेतरेतरयोगाविवक्षयावर्ण्यस्योपमानस्यधर्मस्योपमावाचकस्यवालोपेअन्यतमानुपादानेलुप्तोपमा साचएकद्वित्र्यनुपादानेरष्टधाभिन्नेति
पूर्वापराभ्यामुक्तंभवति॥८। तडिदित्यादीन्युदाहरणानि अथैतोव्याचष्टे उपमेयादीनामिति वस्तुतोलाघवात्पूर्णाभिन्नत्वंलक्षणंबोध्यं लक्षणवाक्यग
तक्रममुपेक्ष्योदाहरणक्रमानुसारेणविभागंदर्शयति यथेत्यादि वाचकलुप्तेति वाचकत्वंचात्रानुपूर्वीविशेषवत्तयोपमाबोधनेनिरूढत्वम्।

कु॰ नं॰
चं॰ टी॰
५

तच्च शक्त्या निरूढलक्षणया वा तत्राद्यमिवादेर्द्वितीयं तु सुहृत्पदादेरिति तदभावात्तडिद्गौरीत्यादौ वाचकलोपः समासानुशासनेन निरूढलक्षणावगमेपि आनुपूर्वीविशेषवत्तया शब्दविशेषस्य तद्बोधनात् शास्त्रकृत इति शास्त्रप्रयुक्त इत्यर्थः कर्पूरंतीत्यत्रेति अत्र सर्वप्रातिपदिकेभ्यः क्विप् वा वक्तव्य इत्यनेन विहितः क्विप् लुप्तोपि स्मर्यमाणो धर्ममात्ररूपं आचारं बोधयति कर्पूरपदं च लक्षणया कर्पूरसादृश्यं तस्य चातिरिक्तत्वे पूर्ववत्प्रयोजकतासंसर्गेणाचारेन्वयो॰ धर्मरूपत्वेन भेदेन वस्तुतस्तु क्विप्लोपाप्रतिसंधानेपि तथाबोधात्कर्पूरादिशब्दा एव कर्पूरादिसादृश्यप्रयोजकाभिन्नं तत्सादृश्याभिन्नं वाचारं लक्षयंतीति युक्तं ननु वाचकस्येवादेरनुपादानाल्लोपो युक्तः साधारणधर्मस्य त्वाचाररूपस्य क्विबुपात्ततया कथं लोपस्तत्राह कर्पूरवदानंदात्मकाचारा

तत्र तडिद्गौरीत्यत्र वाचकलोपस्तडिदिव गौरीत्यर्थे उपमानानि सामान्यवचनैरिति समासविधायकशास्त्रकृतः इंदुतुल्यास्येत्यत्र धर्मलोपः स त्वैच्छिकः न शास्त्रकृतः कांत्या इंदुतुल्यास्येत्यपि वक्तुं शक्यत्वात् कर्पूरंतीत्यत्र धर्मवाचकलोपः कर्पूरमिवाचरतीत्यर्थे विहितस्य कर्पूरवदानंदात्मकाचारार्थकस्य क्विप इवशब्देन सह लोपात् अत्र धर्मलोप ऐच्छिकः नयनयोरानंदात्मकतया कर्पूरंतीति तदुपादानस्यापि संभवादिति कांत्या स्मरवधूयंतीत्यत्र वाचकोपमेयलोपः।

॥ र्थस्य क्विप् इति कर्पूरस्येवेतीवार्थे वतिः आनंदात्मकः जनकतासंबंधेन वस्तुगत्या आनंदस्वरूपोय आचारस्तद्बोधकस्येत्यर्थः ननु क्विप्लोपाज्ज्ञानेप्याचारप्रतीतेः कर्पूरादिपदानामेव तद्बोधकत्वपक्षे कथं धर्मलोपः संगमनीय इति चेत् अत्र प्राचः एवमपि तद्वाचकतया विहितस्य क्विपो लोपात्तल्लोपव्यपदेशः अत एवात्र समानार्थकः क्यच्नोपात्तः तस्यालुप्तत्वादित्याहुः नव्यास्तु धर्ममात्ररूपस्याचारस्योपादानेपि आनंदत्वादिना विशेषरूपेणानुपादानाद्धर्मलोपो युक्त एव अन्यथा इंदुतुल्यास्येत्यादेर्धर्मलुप्तोदाहरणस्यासंगतत्वापत्तेः न चैवं क्यजादावपि धर्मलुप्तास्यादिति वाच्यं इष्टापत्तेरित्याहुः स्मरवधूयंतीत्यत्रेति। ननूपमानादाचार इति कर्मभू

राम॰
५

तादुपमानादाचारेक्यचोविधानात्स्मरवधूरितिमिवाचरंतीत्यवगमेप्यात्मानमन्यांवेतिकथंनिर्णयस्तत्राह विशेषणेति रत्यनुरूपाचरणस्यकांतिकरण
कत्वरूपविशेषणसामर्थ्यादित्यर्थः। कांतेःस्वरसतःस्वीयत्वावगमादितिभावः। नचात्मनउपमेयस्यतन्वीपदेनोपादानात्कथंलोपइतिवाच्यं तस्याः
द्वितीयांततयाकर्मभूतोपमेयासमर्पकत्वात् आत्मानमित्यध्याहृतेनैवतद्बोधात् अत्रचस्मरवधूपदेनस्मरवधूसादृश्यंलक्ष्यते तस्यचप्रयोजकत्वसं
सर्गेणाभेदेनवाऽचारेन्वयः तथाचस्मरवधूसादृश्याभिन्नआत्मकर्मकोयआचारस्तदाश्रयस्तन्वीतिबोधः। काकतालीयेति वृत्तिविषये। समासविष

अत्रकांत्येतिविशेषणसामर्थ्यात्स्वात्मानंकामवधूमिवाचरंतीत्यर्थस्यगम्यमानत्वात्स्वात्मनउपमेयस्यसहोपमावाचकेनानुपादानात्
सत्वेह्विकःस्वात्मानंस्मरवधूयतीत्युपमेयोपादानस्यापिसंभवात् काकतालीयमित्यत्रकाकतालशब्दौवृत्तिविषयेकाकतालसमवेत
क्रियावर्त्तिनौ तेनकाकागमनमिवतालपतनमिवकाकतालमितीवार्थेसमासाच्चतद्विषयादितिज्ञापकात्समासःउभयत्रोपमेयं स्वस्यक.चि
द्गमनंतत्रैवरहसितन्व्याअवस्थानंचतेनस्वस्यतस्याश्चसमागमःकाकतालसमागमसदृशइतिफलति ततःकाकतालमिवकाकता
लीयमितिद्वितीयस्मिन्निवार्थेसमासाच्चतद्विषयादितिसूत्रेणइवेप्रतिकृताविस्यधिकारस्थेनछप्रत्ययः ॥ येज्ञापकादिति इवार्थेसमासाभा
वेतद्विषयादित्यनेनेवार्थविषयसमासानुवादोऽनुपपन्नस्तत्ज्ञापकइत्यर्थः उभयत्रकाकगमनतालपतनयोः उपमेयमित्यनंतरंक्रमेणेतिशेषः। तेनेति
काकतालसमवेतक्रियापरयोः काकतालपदयोरिवार्थेसमासेनेत्यर्थः काकतालसमागमेति अयंभावः। काकगमनतालपतनयोरुपमानत्वेतदुपमे
ययोः स्वीयगमनतन्व्यवस्थानयोः पृथगनुपात्तत्वेनोपमेयतयान्वयायोगात्काकतालसमागमएवोपमानं इत्थंचकाकतालसमागमसदृशंकाकता
लपदार्थस्तस्यचाभेदेनस्वीयतन्वीसमागमरूपेउपमेयेऽन्वयइति ततइति तादृशसमासोत्तरमित्यर्थः। इतितदर्थइति। काकतालपदलक्षितस्यका·

कक्तततालफलोपभोगसदृशस्याभेदेनतन्वीरतिलाभरूपेणोपमेयेनान्वयादितिभावः अत्रपतनदलितमितिरहोदर्शनक्षुभितहृदयेतिचबिंबप्रतिबिंब
भावापन्नधर्मस्वरूपकथनंनत्वेवमन्वयाकारइतिबोध्यंनचसकृदुच्चारिताभ्यांकाकतालपदाभ्यांकथमुपमानद्वयावगमइतिवाच्यं अनुभवानुसार्यनु
शासनेनव्युत्पत्तिवैचित्र्यस्यस्फुटंप्रतिपत्तेरितिएवंदुरूहत्वात्पद्यंव्याख्यायतत्रोपमानलुप्तादींश्चतुरोपिभेदान्दर्शयितुमाहततश्चेति काकागमनेसा
दि काकागमनतालपतनरूपोयः समागमस्तद्रूपस्येत्यर्थः॥ इदंचकाकागमनमिवतालपतनमिवेतिमहाभाष्यगतविग्रहवाक्यविरोधशंकापरिहा
रायोक्तं समागमस्यतादृशक्रियाद्वयाभिन्नत्वेनोक्तयुक्त्यातस्योक्तार्थएवपर्यवसानात् विशिष्टोपमायांविशेषणोपमावगतिवत्समागमोपमायाम

तथाचपतनदलितंतालफलंयथाकाकेनोपभुक्तमेवंरहोदर्शनक्षुभितहृदयातन्वीस्वेनोपभुक्तेतितदर्थः ततश्चात्रकाकागमनतालपतन
समागमरूपस्यकाकक्तततालफलोपभोगरूपस्यचोपमानस्यानुपादानात् प्रत्ययार्थोपमायामुपमानलोपः समासार्थोपमायांवाचको
पमानलोपः सर्वोप्ययंलोपश्छप्रत्ययविधायकशास्त्रकृतः अवितर्कितसंभवमिति साधारणधर्मस्यानुपादानेप्रत्ययार्थोपमायांधर्मोप
मानलोपः समासार्थोपमायांधर्मोपमानवाचकलोपः इतिसूक्ष्मयादृष्ट्यावधारितव्यं एतेषामुदाहरणांतराणिविस्तरभयान्नलिख्यंत

पितद्वयवक्रिययोर्यथायोगंगम्यमानामुपमामभिप्रेत्यमहाभाष्यकृतांतादृशविग्रहवाक्यप्रणयनमित्याशयः धर्मस्यानुपादानइति तत्स्थानेअभ
वत्किंब्रवीमितेइतिपाठइतिभावः॥ ॥इतिश्रीमत्तत्सदुपाख्यरामभट्टसूरिवरात्मजवैद्यनाथविरचितायामलंकारचंद्रिकाख्यायांकुवलयानंदटी
कायामुपमाप्रकरणंसंपूर्णम्॥ ॥ यद्यप्युपमानरूपाणामंतरंतन्मूलालंकारेषुसंभवत्सादृश्याउपमेयोपमैवप्रथमंनिरूपयितुमुचितानचत्वारोपित
त्सादृश्यनिबंधनोनन्वयस्तथापितंद्वितीयसदृशव्यवच्छेदफलकतयानृतीयसदृशव्यवच्छेदफलिकामुपमेयोपमामपेक्ष्यशीघ्रोपस्थितिकमभिप्रेत्यप्रथमं

उपमानोपमेयत्वमिति उपमानत्वमुपमेयत्वंचेत्यर्थः द्वंद्वांते श्रूयमाणत्वात् विवक्ष्यतइतिचशेषः एवंचैकस्यैववस्तुनोयदुपमानत्वमुपमेयत्वंचविवक्ष्यते तदनन्वयइत्यन्वयः असंभवशंकानिरासायमध्येउदाहरणोक्तिः ननूक्तलक्षणस्यभणितिरिवमतिर्मतिरिवचेष्टेत्यादिरशनोपमायामतिव्याप्तिः तत्रमत्यादेरेकस्यैववस्तुनउपमानत्वस्योपमेयत्वस्यचवर्णनात् अथैकस्यवस्तुनोयदेकनिरूपितमुपमानत्वमुपमेयत्वंचेतिविवक्षितं एकपदस्यावृत्तिकल्पनात् इत्थंचरशनोपमायांमत्यादेश्चेष्टादिनिरूपितमुपमानत्वंभणित्यादिनिरूपितंतूपमेयत्वमित्येकनिरूपितोपमानोपमेयत्वविरहान्नातिव्याप्तिरित्युच्यते तदाखमिवजलंजलमिवखमित्युपमेयोपमायामतिव्याप्तिः तत्रैकस्यैववस्तुनोगगनस्यएकजलनिरूपितस्योपमानत्वस्योपमेयत्वस्यचवर्णनादि

उपमानोपमेयत्वंयदेकस्यैववस्तुनः इंदुरिंदुरिवश्रीमानित्यादौतदनन्वयः ११ एकस्यैववस्तुनउपमानोपमेयत्ववर्णनमनन्वयः वर्ण्यमानमपिस्वस्यस्वेनसाधर्म्यनान्वेतीतिव्युत्पत्तेः अनन्वयिनोप्यर्थस्याभिधानेसदृशांतरव्यवच्छेदेनानुपमत्वद्योतनायें दुरिंदुरिवश्रीमानित्युक्तेश्रीमत्वेनचंद्रस्यनान्यःसदृशोस्तीतिसदृशांतरव्यवच्छेदोलक्ष्यते ततश्चस्वेनापिसादृश्यासंभवादनुपमेयत्वप्रतिचेन्नैवं॥ एकस्यैवेतिविरोधद्योतकैवकारबलेनस्वाश्रयनिरूपितयोरुपमानोपमेयत्वयोर्लाभेनक्वाप्यतिप्रसंगाभावात् अस्तिहिइंदुरिंदुरिवेत्यनन्वयेउपमानत्वमुपमेयत्वंचस्वाश्रयेंदुनिरूपितंनतुरशनोपमायामुपमेयोपमायांवेतिसंक्षेपः अनन्वयपदप्रवृत्तिनिमित्तमाह वर्ण्यमानमपीति नान्वेतीति नसंबध्यतइत्यर्थः। साधर्म्यस्यभेदघटितत्वादितिभावः नन्वेवंसत्यसंबद्धप्रलापत्वापत्तिरित्यतआह अनन्वयिनोपीति बाधितस्यापीत्यर्थः। अर्थस्यसाधर्म्यस्यअभिधानंआहार्यारोपरूपतयाप्रतिपादनं सदृशांतरव्यवच्छेदेनसदृशांतरव्यावृत्तिबोधद्वारेण एतदेवविशदयति इंदुरित्यादिना इत्थंचसदृशांतरव्यावृत्तिसूचनद्वारानुपमत्वद्योतनरूपप्रयोजनवत्वादापाततोरुद्ररोदनार्थवादवत् द्वारमात्रतयासादृश्यप्रतिपादनेपिनासंबद्धप्रलापतापत्तिरितिभावः

रसगं

कु·नं·
चं·टी·
७

उदाहरणांतरमाह यथावेति गगनाकारं गगनसदृशं इवेत्यतः प्राक्युद्धमित्यध्याहार्यं उदाहरणांतरप्रदर्शनेबीजमाह पूर्वोदाहरणेति वैपुल्यादेरित्या
दिपदात्गांभीर्यदारुणत्वयोः संग्रहः इत्यनन्वयप्रकरणं॥अथोपमेयोपमालक्षयति॥ पर्यायेणेति अयौगपद्येनेत्यर्थः वाक्यभेदेनेति यावत् तत्उपमानो
पमेयत्वं विवक्ष्यतइतिशेषोत्रापिबोध्यः उपमेयोपमेतिलक्ष्यनिर्देशः उपमेयेनोपमेतिव्युत्पत्तेः। धर्मोर्थइवेत्युदाहरणं अर्थोधनंपूर्णाश्रीः पूर्णसमृद्धिः
अत्रचधर्मार्थयोर्द्वयोर्वाक्यभेदेनउपमानत्वमुपेयत्वंचवर्णितं तत्राद्यवाक्ये र्थस्योपमानत्वंधर्मस्योपमेयत्वं द्वितीयेतुतद्विपर्यासेनधर्मस्योपमानत्वम
र्थस्योपमेयत्वमितिलक्षणसमन्वयः उपमानोपमेयत्वमात्रोक्तावनन्वयेऽतिव्याप्तेर्द्वयोरित्युक्तं।एवमपिसमत्वंशरदिप्रापुरहोकुमुदतारकाइत्यु

यथावा गगनंगगनाकारंसागरःसागरोपमः रामरावणयोर्युद्धंरामरावणयोरिव पूर्वोदाहरणेश्रीमत्वस्यधर्मस्योपादान
मस्तिइहतुगगनादिषुवैपुल्यादेर्धर्मस्यतन्नास्तीतिशेषः। पर्यायेणद्वयोस्तच्चेदुपमेयोपमानता धर्मोर्थइवपूर्णश्रीरर्थोधर्म
इवत्वयि॥१२॥ द्वयोःपर्यायेणोपमानोपमेयत्वकल्पनंतृतीयसदृशव्यवच्छेदार्थं धर्मार्थयोः कस्यचित्केनचित्सादृश्येवर्णिते
तस्याप्यन्येनसादृश्यमर्थसिद्धमपिमुखतोवर्ण्यमानंतृतीयसदृशव्यवच्छेदंफलति॥ ११ भयविश्रांतसादृश्यायामुपमायामतिव्याप्तिः

तत्रद्वयोःकुमुदतारकयोःसादृश्याश्रयत्वरूपोपमेयत्वस्येवतत्प्रतियोगित्वरूपस्योपमानत्वस्याप्यर्थतःप्रतीतेरतःपर्यायेणेत्युक्तं ननुभणितिरिवमति
र्मतिरिवचेष्टाचेष्टेवकीर्तिरतिविमलेतिरशनोपमायामतिव्याप्तिः तत्रद्वयोर्मतिचेष्टयोर्वाक्यभेदेनोपमानोपमेयत्ववर्णनादितिचेत् नद्वयोरित्यनेनपरस्परमु
पमानोपमेयत्वस्यविवक्षितत्वात् अन्यथापर्यायपदेनैवानन्वयवारणेतद्द्वयस्यव्यर्थतापत्तेरितिसंक्षेपः ननूपमाप्रतीपोभयरूपाया उपमाद्वयरूपायावाउपमे
योपमायाअलंकारांतरत्वेकिंबीजमित्यतआह द्वयोरिति तथाचार्थविशेषद्योतकतयाचमत्कृतिवैलक्षण्यमेवतत्रबीजमितिभावः। कथंतृतीयसदृशव्यवच्छे

दलाभस्तमाह।धर्मार्थयोरिति।

धर्मीर्थयोर्मध्यइत्यर्थः मुखतः शब्देन तथाच प्राप्तस्य पुनर्वचनं तदितरपरिसंख्यार्थमिति न्यायादिहापि तृतीयसदृशव्यावृत्तिलाभइतिभावः खमिवेति।
शरत्पूर्णनमिदं खमाकाशमिवजलं कालुष्यापगमेन निर्मलत्वातिशयात् शेषं स्पष्टं निर्मलत्वादीत्यादिपदेनशैत्यातिशयपरिग्रहः गिरिरिवेति अत्र ग
जः प्रकृतः अयमिति प्रकृतपरामर्शिसर्वनामनिर्दिष्टत्वात् अतएवोपक्रमादग्रेप्यस्य मदधारेत्यन्वयोबोध्यः अत्रपूर्वार्द्धे उच्चैकैर्विभातीति समानधर्म
उपात्तः उत्तरार्द्धे च स्रवतीति सउक्तइतिदिक्। इत्युपमेयोपमाकरणं प्रतीपमिति। लक्ष्यनिर्देशः १३ ननूपमानोपमेयभावस्यवैवक्षिकतया मुखादेरप्यु
पमानत्वसंभवाच्चंद्रइवमुखमित्युपमाया मतिव्याप्तिरित्यतआह प्रसिद्धेति प्रसिद्धोपमानस्य उपमेयभावः उपमेयत्वं प्रतीपं प्रतीपपदवाच्यं कुतः

यथावा खमिवजलं जलमिव खं हंसइव चंद्रश्चन्द्रइव हंसः कुमुदाकारास्तारास्ताराकाराणि कुमुदानि पूर्वत्रपूर्णश्रीरितिधर्मउपात्तः इह
निर्मलत्वादिधर्मोनोपात्तइति भेदः उदाहरणद्वयेपि प्रकृतयोरेवोपमानोपमेयत्वकल्पनं राज्ञिधर्मार्थसमृद्धेः शरदिगगनसलिलोः
दिनैर्मल्यस्यच वर्णनीयत्वात् प्रकृताप्रकृतयोरप्येषा संभवति यथा गिरिरिवगजराजोयंगजराजइवोच्चकैर्विभातिगिरिः निर्झरइव
मदधारामदधारेवास्यनिर्झरः स्रवति। प्रतीपमुपमानस्योपमेयत्वप्रकल्पनं त्वल्लोचनसमंपद्मंत्वद्वक्त्रसदृशोविधुः॥१३॥ प्रसिद्धोपमा
नोपमेयभावः प्रातिलोम्यात्प्रतीपं।

१ प्रातिलोम्यात् प्रसिद्धोपमानप्रतिकूलत्वात् उपमेयभावप्रातिलोम्यादित्यविसर्गपाठेपि प्रसिद्धोपमानस्य
उपमेयभावस्तस्यप्रातिलोम्यादुपमायाप्रतिकूलत्वादुपमानस्योपमेयत्वकल्पनं प्रतीपमित्युच्यतइति व्याख्येयं नतु प्रसिद्धस्योपमानोपमेयभावस्यवैपरी
त्यादिति यथाश्रुतरीत्या एवंविधप्रातिलोम्यस्य तृतीयपंचमप्रतीपभेदाव्यापित्वेन प्रतीपपदप्रवृत्तिनिमित्तत्वायोगादिति एवंचोक्तप्रकारेणोपमानप्रति
कूल्यस्य प्रतीपपदप्रवृत्तिनिमित्तत्वकथनेन प्रसिद्धोपमानप्रतिकूलधर्मः प्रतीपमिति प्रतीपपंचकसाधारणंसामान्यलक्षणमितिसूचितं अतएवपंचमप्रती

पव्याख्यानावसरे वक्ष्यति उपमानप्रातिलोम्यादिति प्रतिकूलत्वं च तिरस्कारप्रयोजकत्वं तस्य च सकलप्रतीपभेदसाधारण्यं तत्र तत्र स्फुटीकरिष्यते यथा वेति प्रोषितस्य प्रियां प्रति वियोगवेदनानिवेदनमिदं अयि प्रिये त्वदीयसादृश्येन विनोदं विनोदो विरहयापनं तन्मात्रमपि मम दैवेन न क्षम्यते एतदेव दर्शयति यदित्यादिना त्वन्नेत्रयोः समाना साधारणी कांतिः शोभा यस्य तथाविधं यदिंदीवरं तत्सलिले मग्नं वर्षर्तुना जलरुद्धैः तव मुखस्य छाया कांत्या अनुकारी सदृशः शशी मेघैरंतरितस्तिरोहितः येपीत्यपि भिन्नक्रमः त्वद्गमनसदृशगतयो ये राजहंसास्तेपि गता इति अत्र कांतीत्यादि धर्मोपादानात् पूर्वोदाहरणवैलक्षण्यं बोध्यम् ननूपमानादुपमेयस्याधिक्यवर्णनारूपात् व्यतिरेकालंकारादस्य को भेदः उच्यते तत्र वैधर्म्यप्रयुक्तमुपमेयस्याधिक्यं विव

यथा वा यत्त्वन्नेत्रसमानकांति सलिले मग्नं तदिंदीवरं मेघैरंतरितः प्रिये तव मुखच्छायानुकारी शशी येपि त्वद्गमनानुसारिगतयस्ते राजहंसा गतास्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते॥ अन्योपमेयलाभेन वर्ण्यस्यानादरश्च तत् अलं गर्वेण ते वक्त्र कांत्या चंद्रोपि तादृशः १४ अत्युत्कृष्टगुणतया वर्ण्यमानस्यान्यत्र स्वसादृश्यमसहमानस्योपमेयं किंचित्प्रदर्शयता वर्ते वनस्य तिरस्कारो द्वितीयं प्रतीपं पूर्वस्मादपि विच्छित्तिविशेषशालि यथा वा गर्वमसंवाह्यमिमं लोचनयुगलेन किं वहसि भद्रे संतीदृशानि दिशि दिशि सरस्सु ननु नीलनलिनानि॥ ७ ॥ ८॥

क्षितमिह तूपमानतामात्रप्रयुक्तत्वात्साधर्म्यप्रयुक्तमिति प्रतीपांतरमाह अन्योपमेयेति अन्यद्वर्ण्यं उपमानं तद्रूपं यदुपमेयं तस्य लाभेन वर्णनीयस्य मुखादेरनादरो गर्वपरिहारोपितत्प्रतीपमित्यर्थः। तस्य गर्वप्रसक्तिपूर्वकत्वेनोपमेयताया अपि पूर्वमप्राप्त्या उपमानतिरस्कृतिविशेषप्रयोजकत्वादिति भावः अत एव लाभे न त्वुक्तं न तु सत्वेनेति अप्राप्तप्राप्तेर्लाभशब्दार्थत्वात् विच्छित्तिविशेषेति चमत्कारोत्कर्षेत्यर्थः उक्तरीत्योपमानतिरस्कारातिशयप्रतीतेरिति भावः गर्वमिति असंवाह्यं संवहनायोग्यं अपरिमितमिति यावत् भद्रे शोभने इति संबोधनं नन्विति हेत्वर्थे अव्ययानामनेकार्थत्वात् पूर्वोदाहरणे कांत्येति समानधर्मोपादा

॥ तृतीयप्रतीपं

22-1-55.

वर्ण्योपमेयेति अन्यस्यावर्ण्यस्य अनादरोपित्थाप्रतीपमित्यर्थः अहमेवेति सुदारुणानामतितीव्राणां गुरुः श्रेष्ठः तातेति सानुकंपसंबोधनं मास्मदृप्य
इति दर्पमाकुर्था इत्यर्थः। वर्ण्येनान्यस्येति निरूपितत्वं तृतीयार्थः वर्ण्यनिरूपितायान्यस्यावर्ण्यस्योपमातस्या इत्यर्थः। अनिष्पत्तिवचः उच्यमाना अ
निष्पत्तिः कृदभिहितइतिन्यायात् तत्प्रतीपं मुधेति किलेतिवार्तायांत्वन्मुखाभमंबुजमितिवार्तामुधानिष्प्रयोजनाऽपवादः अलीकार्थकत्वेनापवादस्या
निष्प्रयोजनत्वं उत्कर्षेति उपमानतिरस्कारातिशयप्रयोजकत्वरूपेत्यर्थः मुधापवादत्वोक्त्येति उक्तार्थमेनत् आकर्णयेति वचनीयं अलीकतयानिंदितं

वर्ण्योपमेयलाभेनतथान्यस्याप्यनादरः कः क्रौर्यदर्पस्तेमृत्योत्वत्तुल्याः संतिहिस्त्रियः १५॥ अत्युत्कृष्टगुणतयाक्वचिदप्युपमानभावमसह
मानस्यावर्ण्यस्यवर्ण्यमुपमेयंपरिकल्प्यतावतातस्यतिरस्कारः पूर्वप्रतीपवैपरीत्येनतृतीयंप्रतीपं यथावा अहमेवगुरुः सुदारुणानामिति
हालाहलमास्मतातदृप्यः ननुसंतिभवादृशानिभूयोभुवनेस्मिन्वचनानिदुर्जनानां। वर्ण्येनान्यस्योपमायाअनिष्पत्तिवचश्चतत् मुधापवादो
मुग्धाक्षित्वन्मुखाभंकिलांबुजं १६ अवर्ण्यवर्ण्योपममित्यनिष्पत्तिवचनंपूर्वं भ्य उत्कर्षशालिचतुर्थंप्रतीपं उदाहरणेमुधापवादत्वोक्त्योपमि
त्यनि ष्पत्तिरुद्घाटिता यथावा आकर्णयसरोजाक्षिवचनीयमिदंभुवि॥ शशांकस्तववक्त्रेणपामरैरुपमीयते॥ प्रतीपमुपमानस्यकैमर्थ्य
मपिमन्वते दृष्टंचेद्वदनंतस्याः किंपद्मेनकिमिंदुना १७ उपमेयस्यैवोपमानप्रयोजनधूर्वहत्वेनोपमानकैमर्थ्यं

१अतएवभुवीत्युक्तं लोकां
तरेमुखासन्निधानेनविशेषादर्शनादलीकत्वग्रहायोगात् सन्निधानेपिविशेषाग्रहणात्पामरैरित्युक्तं अत्रवचनीयपामरैरित्येताभ्यामुपमितेरनिष्पत्तिः
प्रकाश्यते प्रतीपमिति कः अर्थः प्रयोजनंयस्यतत्तथा अनर्थकमितियावत्तस्यभावः कैमर्थ्यंतदपिप्रतीपंमन्वतेआलंकारिकाइतिशेषः ननूपमानस्यपद्मचंद्रा
देराह्लादविशेषरूपप्रयोजनसत्वात्कथमनर्थकत्वमतआह उपमेयस्यैवेति उपमानधूर्वहत्वेन उपमानकार्यकारित्वेन अयंचोपमानकैमर्थ्येहेतुः। १

कु॰ नं॰ ९

अतश्चोपमानकैमर्थ्यमित्यध्याहार्य्यं आल्हादविशेषादेरन्यलभ्यत्वेन प्रयोजनत्वासंभवात्कैमर्थ्यमिति भावः उपमानप्रयोजकधूर्वहत्वेनेति पाठेउ
पमानंप्रयोजकंयस्यादिति बहुव्रीहिः ननूपमानकैमर्थ्यस्योपमानाक्षेपश्चाक्षेपइतिवामनसूत्रेणाक्षेपालंकारत्वेनोक्तत्वात्कथंप्रतीपत्वमत आह॥ उपमा
नप्रातिलोम्यादिति उपमानप्रतिकूलत्वादित्यर्थः प्रतिकूलत्वंचतिरस्कारप्रयोजकत्वमित्युक्तं तथाचप्रतीपसामान्यलक्षणाक्रांतत्वात्प्रतीपांतर्भा
वएवोचितइतिभावः॥ तदोजसइति नैषधीयेनैषधवर्णनमिदं विधिर्ब्रह्मातस्यनलस्यौजसः प्रतापस्यतद्यशसश्चस्थितौसत्यांइमौ सूर्यचंद्रौवृथा
प्रतापज्योत्स्नादेः कार्यस्यताभ्यामेवोपपन्नेर्निरर्थकाविति चित्तेपदापदाकुरुतेतदाभानोर्विधोश्चपरिवेषस्यपरिधेः कैतवाच्छलात्कुंडलानावैय्यर्थ्यसू
चिकांरेखावेष्टनांकरोतीत्यन्वयः अत्रचनायंपरिवेषः किंतुकुंडलनेत्यपन्हुतौकैमर्थ्यरूपप्रतीपस्यांगत्वात्तयोरंगांगिभावलक्षणःसंकरः यद्यत्साप

मुपमानप्रातिलोम्यात्संचमंप्रतीपं यथावा तदोजसस्तद्यशसः स्थिताविमौवृथेतिचित्तेकुरुतेयदा यदा तनोतिभानोःपरिवेषकैत
वात्तदाविधिःकुंडलनांविधोरपि॥ केचिदनन्वयोपमेयोपमाप्रतीपानामुपमाविशेषत्वेनतदंतर्भावंमन्यन्ते॥ १ मित्यादिवच्चतत्सदेवी

प्सायाअकरणंनदोषइतिबोध्यम् केचिद्दंडीप्रभृतयः॥ अनन्वयोपमाप्रतीपानामिति प्रतीपपदेनचात्राद्यभेदत्रयमेवगृह्यते नत्वंत्यभेदद्वयमपि तत्रो
पमितिक्रियानिष्पत्तेरभावेनोपमांतर्भावस्यासंभवात् वस्तुतस्त्वाद्यभेदत्रयस्यापिनोपमांतर्गतिर्युक्ता चमत्कारंप्रतिसाधर्म्यस्यप्राधान्येनाप्रयोजक
त्वात् सामर्थ्यनिबंधनउपमानतिरस्कारएवहितत्रचमत्कृतिप्रयोजकतयाविवक्षितोनतुसाधर्म्यमेवमुखतश्चमत्कारितयाविवक्षितमितिसहृदय
साक्षिकं एवमनन्वयोपमेयोपमयोरपिनसादृश्यस्यचमत्कारितयाप्राधान्येनविवक्षाकिंतुद्वितीयतृतीयसदृशव्यवच्छेदोपायतयेतिनतयो राम॰
रप्युपमांतर्गतिर्युज्यते अन्यथासादृश्यवर्णनमात्रेणोपमांतर्भावेधैर्यलावण्यगांभीर्यप्रमुखैस्त्वमुदन्वतः गुणैस्तुल्योसिभेदस्तुवपुषैवे ९

दृशानतइतिव्यतिरेकालंकारस्याप्युपमांतर्गतिः स्यात् तत्रसाधर्म्यसमानाधिकरणंवैधर्म्यमेवचमत्कारेप्रधानंनतुसाधर्म्यमितिचेत्तुल्यमि
दंप्रतीपादिष्वपीतिसहृदयैराकलनीयं एतदेवास्वरसबीजमभिसंधायोक्तंकेचिदिति अन्येवामनादयः अत्रचास्वरसबीजंप्रागेवावेदितं॥
इतिप्रतीपकरणं॥ रूपकंलक्षयति विषय्यभेदेति रूप्यतेइतरव्यावृत्ततयाज्ञाप्यतेधर्मी अनेनेतिरूपंतत् रूपमस्यासौतद्रूपस्तस्यभावस्ताद्रूप्यंच
द्रकार्यकारित्वादि विषयिणउपमानस्यअभेदताद्रूप्याभ्यांविषयस्योपमेयस्ययत् रंजनमिवरंजनंस्वोपरक्तबुद्धिविषयीकरणमितियावत् तद्रूप
कमित्यर्थः रूपकंतदित्येवपाठः रूपकंत्वितिपाठेतुतदित्यध्याहार्यं उपात्तविंबाविशिष्टविषयधर्मिकाहार्यारोपनिश्चयविषयीभूतंउपमानाऽभेदता
द्रूप्यान्यतरत् रूपकमितितुनिष्कर्षः। मुखंचंद्रइत्यादौनामार्थयोरभेदान्वयव्युत्पत्तिवशादाहार्यचंद्राभेदनिश्चयाल्लक्षणसमन्वयः मुखमपरश्चंद्र

अन्येतुपंचमंप्रतीपप्रकारंउपमानाक्षेपरूपत्वादाक्षेपालंकारमाहुः। विषय्यभेदताद्रूप्यरंजनंविषयस्ययत् रूपकंतत्त्रिधाधिक्यन्यून
त्वानुभयोक्तिभिः॥१८॥

११ इत्यत्रतुनचंद्राभेदोविषयः अपह्नुतिभेदस्यविवक्षितत्वात् अपितुचन्द्रकार्यकारित्वरूपंताद्रूप्यमितितत्रापिल
क्षणसंगतिः नचतस्यमुखेसत्वात्कथमारोपइतिवाच्यं चंद्रकार्यसजातीयकारित्वस्यैवमुखेसत्वादिति यद्यपिनामार्थयोरभेदान्वयानुरोधादि
हापिचंद्रपदलक्षितस्यतत्कार्यकारिणोऽभेदसंसर्गेणैवमुखेऽन्वयादभेदरूपकमेवतथाप्युपमानतावच्छेदकरूपेणाभेदभानेएवाभेदरूपकत्वंतत्कार्यका
रित्वादिरूपेणाभेदभानेतुताद्रूप्यरूपकत्वमितिनासंग्यं अत्रकमलमनंभसिकमलेचकुवलेयेतानिकनकलतिकायामित्याद्यतिशयोक्तिवारणायोपात्ते
तिविषयविशेषणं आरोपश्चनिषेधानंगकत्वेनविशेषणीयः तेनापह्नुतौनातिव्याप्तिःभ्रांतिवारणायाहार्येतित्वत्सादनखरत्नानांयदलक्तकमार्जनं इ
दंश्रीखंडलेपेनपांडुरीकरणंविधोरितिनिदर्शनावारणायविंबाविशिष्टेतिसंशयोत्प्रेक्षयोर्निरासायनिश्चयेत्युक्तमितिसंक्षेपः आधिक्येत्यादिआधि

कुं॰नं॰ क्यमुपमानस्यस्वाभाविकीमवस्थामपेक्ष्योपमेयताद्रात्म्यावस्थायांबोध्यम्। एवंन्यूनत्वमपि अनुभयं आधिक्यन्यूनत्वोभयरहितंअभेदताद्रूप्या॰
१० न्यतरमात्रम् अयंहीत्यादि अयंवर्ण्यमानोराजायेनहेतुनापुरः नगर्यः शिवस्यापित्रिपुरदग्धृत्वात्सएवायमितिभावः। तार्तीयीकमिति तृतीयमेवता॰
र्तीयीकं तीयादीकक्स्वार्थेवाच्यइतिवार्त्तिकानुसारात् विलोचनंविनेत्यन्वयः॥१९॥ शंभुरिति अत्राप्ययमित्यनुषंजनीयं अन्यथाऽतिशयोक्त्यापत्त्या
रूपकोदाहरणत्वासंगतेः॥ अयंराजभावावस्थायां समदृष्टितां समसंख्यलोचनतां एकरूपलोचनवत्तांच मुखेंदुनेति अत्रेंदुपदमिंदुकार्यकारिपरं कि
मिंदुनेति प्रसिद्धचंद्राद्भेदविवक्षणात्। अतश्चंद्रताद्रूप्यरूपकमिदं नचात्रोत्तरपदार्थप्राधान्यादिंदुकार्यकारिणिमुखाभेदभानान्मुखाभेदरूपकंस्या

अयंहि धूर्जटिः साक्षाद्येनदग्धाः पुरः क्षणात्॥ अयमस्तेविनाशंभुस्तार्तीयीकंविलोचनं १९ शंभुर्विश्वमवत्यद्यस्वीकृत्यसमदृष्टितां अ
स्यामुखेंदुनालब्धेनेत्रानंदेकिमिंदुना २० साध्वीयमपरालक्ष्मीरसुधासागरोदिता अयंकलंकिनश्चंद्रान्मुखचंद्रोतिरिच्यते॥२१
विषय्युपमानभूतंपद्मादिविषयस्तदुपमेयंवर्णनीयंमुखादि विषयिणोरूपेणविषयस्यरंजनंरूपकं॥ २९तन्नतुचन्द्रताद्रूप्यरूपकमितिवा

च्यम् व्युत्पत्तिवैचित्र्येणमुखस्यस्वनिष्ठाभेदप्रतियोगित्वसंसर्गेणान्वयाभ्युपगमात् विशेषणानुयोगिकस्यापिविशेषणसंबंधतायाःस्वामित्वस्यष
ष्ठ्यर्थत्ववादिभिः प्राचीनैश्चैत्रस्यधनमित्यादावंगीकारात् एवंचमुखनिष्ठाभेदप्रतियोगीचंद्रस्तत्कार्यकारीवतिबोधान्नमुखाभेदरूपकापत्तिः मुखप्रति
योगिकाभेदस्याभानादिति एवमन्यत्राप्यूह्यं२० असुधेति सुधासागरादुदिताउत्पन्नाप्रसिद्धालक्ष्मीः इयंतुनतथेतिन्यूनत्वोक्तिः अतिरिच्यतइति निष्क
लंकतयाअधिकोभवतीत्यर्थः २१ लक्षणश्लोकंव्याचष्टे विषय्युपमानेत्यादि विषयिणोऽभेदेनरूपेणचेति पाठः रूपेण आल्हादकत्वादिनाताद्रूप्ये राम
णाक्रचित्ताद्रूप्येणचेत्येवपाठः परमार्थतस्तुप्रामाणिकपुस्तकेषु विषयिणोरूपेणविषयस्यरंजनमितियुक्ततरःपाठःतेनतच्चेत्यादेर्नपौनरुक्त्यमितिध्येयम्। १०

...सप
...त्यर्थः अत्रयुक्तस्यरंजनशब्दस्येहप्रवृत्तौबीजमाह॥ अन्यरूपेणेति॥ रूपंरक्तपीतादिकं अभेदताद्रूप्येच तथाचान्यदीयधर्मेणा
...मिति पो...दनत्वसामान्यादिहगौण्यारंजनशब्दप्रयोगइतिभावः तच्चेति रंजनंचेत्यर्थः प्रसिद्धेति कविसंप्रदायप्रसिद्धोपमानाभेदेनलब्धा
...रूपपदस्याभेदताद्रूप्योभयसाधारणत्वादितिभावः॥ अभेदेनरूपेणचेतिपाठेतु तच्चेत्यत्रशब्दोहेत्वर्थकः तेनपूर्वोक्तस्यैवसमर्थ
...नरूक्त्यं तावत्विधांतरोक्तेःप्राक् उद्देशक्रमप्रातिलोम्येनेति निर्देशक्रमवैपरीत्येनेत्यर्थः तदेवविशदयति येनेत्यादि विशेषणेनेतिहेतो

अन्यरूपेणरूपवतःकरणात्तच्चक्वचित्प्रसिद्धविषय्यभेदपर्यवसितम् क्वचिद्भेदेप्रतीयमानएवतदीयधर्मारोपमात्रपर्यवसितं ततश्च
रूपकंतावद्विविधं अभेदरूपकंताद्रूप्यरूपकंचेति द्विविधमपिप्रत्येकंत्रिविधं प्रसिद्धविषय्याधिक्यवर्णनेनन्यूनत्ववर्णनेनानुभयोक्त्याचैवंरूपकंषड्वि
धं अयंहीत्यादिसार्द्धश्लोकेनाभेदरूपकाणि अस्यामुखेन्दुनेत्यादिसार्द्धश्लोकेनताद्रूप्यरूपकाणि आधिक्यन्यूनत्वानुभयोक्त्तुद्दे
शक्रमप्रातिलोम्येनोदाहृतानि येनदग्धाइतिविशेषणेनवर्णनीयराज्ञिप्रसिद्धशिवाभेदोनुरंजनाच्छिवस्यपूर्वावस्थातोवर्णनीयराजभा
वावस्थायांन्यूनत्वाधिक्ययोरवर्णनाच्चानुभयाभेदरूपकमाद्यं तृतीयलोचनप्रहाणोक्त्यापूर्वावस्थातोन्यूनताप्रदर्शनान्न्यूनाभेदरूपकंद्वि
तीयं न्यूनत्ववर्णनमपि अभेददार्ढ्योपादकत्वाच्चमत्कारिविषमदृष्टित्वपरित्यागेनजगद्रक्षकत्वोक्त्याशिवस्यपूर्वावस्थातोवर्णनीयराजभा
वावस्थायांउत्कर्षविभावनादधिकाभेदरूपकंतृतीयं॥ एवमुत्तरेषुताद्रूप्यरूपकोदाहरणेष्वपिक्रमेणानुभयन्यूनाधिकभावाउन्नेयाः १

तृतीयापुरदग्धृत्वविशेषणहेतुकशिवाभेदानुरंजनादित्यर्थः ननुन्यूनत्ववर्णनेभेदापकर्षयोःप्रतीतेःकथंचमत्कारितेत्यतआह अभेदार्ढ्यो पादकत्वादितिवि
शेषनिषेधस्यशेषाभ्यनुज्ञाफलकतयानिषिद्धव्यतिरिक्तसकलगुणशालिताप्रतीतावेकदेशविरूतमनन्यवद्भवतीतिन्यायेनाभेदनिश्चयसंपादकत्वादित्यर्थः

कु॰ नं॰ विभावनात् प्रकाशनात् चंद्रज्योत्स्नेति राजानंप्रतिकस्यचिदुक्तिः हेभगवन् चंद्रज्योत्स्नावत् विशदंश्वेतंपुलिनंयस्यतथाभूतेऽस्मिन्शरय्वाः शरयूना चं॰टी॰
११ मकनद्याः सैकतेसिकतामयदेशेकयोश्चित्सिद्धतरुणयोः चिरतरं अतिचिरकालंवादरूपंद्यूतमभूत् कीदृक्तत्राहएकः सिद्धयुवाकैटभेदैत्यविशेषंप्रथ
मंनिहतंवक्तिवदति अन्यः कंसंप्रथमंनि हतंवक्ति सः कंसकैटभयोर्निहंतात्वंतत्रतयोर्मध्येपूर्वकोहतइतितत्वंकथयेत्यन्वयः यद्यपिसुनिप्रभृतावेवभग
वन्नित्यामंत्रणमुचितंनराजादौतथापिराज्ञोभगवत्तादात्म्यवर्णनादनौचित्यंपरिहरणीयंक्वचित्तुभवेतेतिपाठः अत्रज्योत्स्नापदेनैवचंद्रिकालाभेपि चंद्र

अनेनैवक्रमेणोदाहरणांतराणि चंद्रज्योत्स्नाविशदपुलिनेसैकतेस्मिन्शरय्वावादद्यूतंचिरतरमभूत्सिद्धयूनोः कयोश्चित् एकोवक्तिप्र
थमनिहतंकैटभंकंसमन्यस्तत्वंसत्वंकथयभगवन्कोहतस्तत्रपूर्वं अत्रसत्वमित्यनेनयः कंसकैटभयोर्हंतागरुडध्वजस्तत्तादात्म्यवर्ण
नीयस्यराज्ञःप्रतिपाद्यतंप्रतिकंसकैटभवधयोः पौर्वापर्यप्रश्नव्याजेनतत्तादात्म्यदार्ढ्यकरणात्पूर्वावस्थातउत्कर्षापकर्षयोरविभावनाच्चा
नुभयाभेदरूपकं वेधाद्वेधाभ्रमंचक्रेकांतासुकनकेषुच तासुतेष्वप्यनासक्तः साक्षाद्भर्गोनराकृतिः अत्रसाक्षादितिविशेषणेनविर
क्तस्यप्रसिद्धशिवतादात्म्यमुपदिश्यनराकृतिरिति दिव्यमूर्त्तिवैकल्यप्रतिपादनान्न्यूनाभेदरूपकं त्वय्यागतेकिमितिवेपतएषसिंधुस्त्वं
मंथकृद्तः किमसौबिभेति

१शारदपूर्णचंद्रपरतयानापुष्टार्थं पुष्पमालेत्यत्रपुष्पपदमिवोत्कृष्टपुष्पपरतयेतिबोध्यम् वादयोग्यतासूचना
अयंहीत्युदाहरणेऽभेदारोपहेतुभूतंपुरदाहकत्वरूपंसाधर्म्यमुपात्तं इहतुजगद्रक्षकत्वादिकंतत्गम्यमानमितिभेदः वेधाइति द्वेधाकां
सेतुर्मिकत्वरूपविधाद्वययुक्तं भ्रमंबलवदनिष्टाननुबंधिसुखसाधनत्वभ्रमं सर्वेषामपिभ्रमाणांवेधसानिर्माणेपिप्राधान्यविवक्षयेत्य राम
त्युक्तं उदाहरणेशंभुसादृश्यंगम्यमानमिहत्वनासक्तिरूपंतदुपात्तमितिभेदः त्वय्यागतइति राजानंप्रतिकवेरुक्तिः सेतुश्चमंथश्चेति ११
कृतक

...न द्वीपांतरेपीत्यपिनासुतरामेतत्तद्वीपेनास्तीति सूच्यते अद्यराजभावावस्थायांशंभुर्विश्वमित्यत्रविश्वसंरक्षकत्वंसादृश्य
...भेदः ...कपद्मस्येति दयितांप्रतिनायकोक्तिः तववक्त्ररूपेइंदुकार्यकारिणि सति अयमपरः प्रसिद्धः शीतांशुश्चंद्रः यत्उज्जृंभतेउदि
...तस्मात् एवंवक्त्रेंदुः पद्मस्यरुचिंकांतिंकिंनहंतिप्रयोजनमनुद्दिश्यनमंदोपिप्रवर्ततइतिन्यायात् प्रयोजनस्यान्यतःसंभवेतदुज्जृंभणस्यासंग
... किंत्वहंतीतिकाक्वा अपितुहंत्येवेतिपर्यवसानेतदुज्जृंभणंवृथेतिप्रतीतिपर्यवसानं एवमग्रिमवाक्ययोरपिझषोमकरःकेतनंचिन्हमस्यतथा

द्वीपांतरेपिनहितेस्त्यवशंवदोद्यत्वांराजपुंगवनिषेवतएवलक्ष्मीः। अत्रत्वसेतुमंथकृदितिसेतोर्मथनस्य...पुरुषोत्तमेनसहवर्णनीय
स्यतादात्म्यमुक्त्वातथापित्वदागमनंसेतुबंधायमथनाययेवतिसमुद्रेणनभेतव्यंद्वीपांतराणामपित्वद्वशंवदत्वेनपूर्ववत् द्वीपांतरेजेत
व्याभावात्प्राप्तलक्ष्मीकत्वेनमंथनप्रसक्त्यभावाच्चेतिपूर्वावस्थातउत्कर्षविभावनादधिकाभेदरूपकं। किंपद्मस्यरुचिंनहंतिनयनानंदं
विधत्तेनकिंवृद्धिंवाझषकेतनस्यकुरुतेनालोकमात्रेणकिं वक्त्रेंदौतवसत्ययंयदपरःशीतांशुरुज्जृंभतेदर्पःस्यादमृतेनचेदिहतदप्य
स्त्येवबिंबाधरे अत्रापरःशीतांशुरित्यनेनवक्त्रेंदोःप्रसिद्धचंद्राद्भेदमाविष्कृत्यतस्यचप्रसिद्धचंद्रकार्यकारित्वमात्रप्रतिपादनेनोत्क
र्षापकर्षयोरप्रदर्शनादनुभयताद्रूप्यरूपकं। अचतुर्वदनोब्रह्माद्विबाहुरपरोहरिः अभाललोचनःशंभुर्भगवान्बादरायणः ॥ भूतस्यसमुद्भ...
कामस्यचआलोकनमालोकः प्रकाशश्चतन्मात्रेण अमृतेनदर्पोभिमानःउज्जृंभणहेतुःस्याच्चेत् अयुक्तमेतत् यतःइहवक्त्रेंदौबिंबाधरेतदप्यस्त्येवेतिस
मुच्चितपदाध्याहारेणयोजनीयम् यच्छब्दस्योत्तरवाक्यगतत्वेनतच्छब्दाक्षेपक्षमत्वान्नतदनुपादानेपिन्यूनपदत्वदोषः कार्यकारित्वमात्रेत्यनेना
भेदव्यावृत्तिः अस्यामुखेंदुनेत्यत्रकिमिंदुनेतिपुनरुपादानमात्रंभेदविवक्षाज्ञापकंइहत्वपरशब्दस्याप्युपादानमितिविशेषः अचतुर्वदनइति बादरायणोव्या

कु॰ नं॰ १२ ननु हरावपर इति विशेषणात्तदंशे एव ताद्रूप्यरूपकं स्यात् इतरांशे त्वभेदरूपकमेवेत्याशंक्याह अत्रेति त्रिष्वपीति एकत्रानेकारोपरूपायां रूपकमालायामवैरूप्याय तात्पर्यग्राहकस्यैकत्र स्थितस्यापि साधारण्यमेवोचितमिति भावः अयमेव चसा ध्वीत्यादिपूर्वोदाहरणाद्विशेषः न्यूनरूपकस्य च मत्कारित्वं पूर्वमुक्तं वृद्धसंमत्या दृढयति। इदमिति यदाहेत्यनंतरं स इति शेषः। एकगुणहानौ अभिहितायामिति शेषः गुणसाम्यदार्ढ्ये शेषगुणप्रयुक्तसाम्यायोगव्यवच्छेदः चतुर्वदनत्वाद्येकगुणव्यतिरेकस्य प्रमाणान्तरसिद्धस्य पुनर्वचनं शेषगुणाभावपरिसंख्यार्थं पर्यवस्यतीति भावः अत्र च रूपकभेदत्वेनैव चमत्कारोपपत्तौ नालंकारांतरत्वं न्यूनत्ववर्णनस्य युक्तं सामग्रीकालीनकार्याभावस्य त्वलंकारांतरासंभिन्नस्य तद्धस्य माणं युक्तमित्यस्वरसो मतमित्यने चं॰ टी॰

अत्र हरावपर इति विशेषणात्त्रिष्वपि ताद्रूप्यमात्रविवक्षाविभाविता चतुर्वदनत्वादिवैकल्यं चोक्तमिति न्यूनताद्रूप्यरूपकं इदं विशेषोक्त्युदाहरणमिति वामनमतं यदाह एकगुणहानौ गुणसाम्यदार्ढ्यं विशेषोक्तिरिति। किमसुभिर्ग्लपितैर्जड मन्यसे मयि निमज्जतु भीमसुतामनः मम किल श्रुतिमाह तदर्थिकां नलमुखेंदुपरां विबुधः स्मरः। अत्रदमयंतीकृतचंद्रोपालंभे प्रसिद्धचंद्रो न निर्याणकालिकमनः प्रवेशश्रुतितात्पर्यविषयः किंतु नलमुखचन्द्र एवेति ततो स्याधिक्यप्रतिपादनादधिकताद्रूप्यरूपकं रूपकस्य सावयवत्वनिरवयवत्वादिभेदस्त्र पंचनंतु चित्रमीमांसायां द्रष्टव्यम्

९ न सूचितः किमसुभिरिति जडेति मूर्खजलमयेति साधारणं चंद्रसंबोधनं ग्लपितैर्नष्टैरसुभिर्निमित्तभूतै
या[illegible]त्यामनः मयि निमज्जतु निलीयतामिति मन्यसे किमिति सोपहासकाकुः तन मैवं मंस्या इत्यर्थः। अत्र हेतुमाह किल निश्चितं मम विबुधः प
[illegible]ः प्राणनिर्गमकालीनमनः प्रवेशः अर्थो यस्यास्तां श्रुतिं नलमुखेंदुपरां मनः प्रवेशाधिकरणत्वेन नलमुखचंद्रतात्पर्यवती माहेति अ राम
[illegible]दोषशून्यत्वप्रयुक्तं शाब्दमाधिक्यं इह तु गुणविशेषप्रयुक्तं गम्यमानं तदिति विशेषः सावयवत्वनिरवयवत्वादिति आदिनास १२

मस्तवस्तुविषयत्वादिरूपैतत्सभेदानां परंपरितत्वरूपभेदान्तरस्य च परिग्रहः तथाहि सावयवं निरवयवं परंपरितं चेति त्रिविधं रूपकं प्रत्येकं क्रमेण
द्विविधं समस्तवस्तुविषयं एकदेशविवर्त्ति च केवलं मालाच श्लिष्टवाचकं अश्लिष्टवाचकं चेति श्लिष्टाश्लिष्टभेदयोः केवलमालारूपत्वाभ्यामंसेच
तुर्विधमित्यष्टौ भेदाः तत्रज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारकास्थीन्यंतर्धानव्यसनरसिका रात्रिकापालिकीयं द्वीपात् द्वीपं भ्रमति दधती चंद्रमुद्राक
पालेन्यस्तं सिद्धांजनपरिमलं लांछनस्यच्छलेनेति पद्ये रात्रौ कापालिकीत्वारोपस्य प्रधानतयावयविनोऽवयवरूपाणि ज्योत्स्नाभस्मेत्यादिरूपकाणीति सावय
वत्वं समस्तस्य वस्तुन आरोप्यमाणस्य शब्दविषयत्वं च द्रष्टव्यं प्रौढमौक्तिकरुचः पयोमुचां बिंदवः कुटजपुष्पबंधवः विद्युतां नभसि नाट्यमंडले कुर्वते स्म
कुसुमांजलिश्रियमित्यत्र प्रधानस्य नभसि नाट्यमंडलत्वारोपस्यावयवभूतं विद्युतां नर्तकीत्वरूपणमार्थं न शाब्दमित्येकदेशविशेषेण शाब्दतयावर्तना

॥ परिणामः क्रियार्थश्चेद्विषयी विषयात्मना प्रसन्नेन दृगब्जेन वीक्षते मदिरेक्षणा

देकदेशविवर्त्तित्वं कुरंगीवांगानि स्तिमितयति गीतध्वनिषु यत्सखीं कांतोदंतं श्रुतमपि पुनः प्रश्नयति यत् अनिद्रं यच्चांतः स्वपिति तदहो वेद्म्यभिनवां प्रवृत्तोस्याः सेक्तुं हृ
दि मनसिजः प्रेमलतिकामित्यत्र प्रेमलतिकामित्यमालारूपं निरवयवं सौंदर्यस्य तरंगिणी तरुणिमोत्कर्षस्य हर्षोद्गमः कांतेः कार्मणकर्म नर्मरहसामुल्लासनावासभूः
विद्यावक्रगिरां विधेरनवधिप्रावीण्यसाक्षात्क्रियाबाणाः पंचशिखीमुखस्य ललनाचूडामणिः सा प्रिये त्यत्र च मालारूपं निरवयवं बोध्यम् एवं अलौकिकमहालोकप्र
काशितजगत्त्रयः स्तूयते देवसद्वंशः मुक्तारत्नैः नैकैर्भवानित्यत्र वेणुकुलयोः श्लिष्टेन वंशपदेन कुले वेणुत्वारोपपूर्वकस्य वराज्ञि मुक्तारत्नत्वारोप इति श्लिष्टवाचकं केवलं
परंपरितरूपकं विद्वन्मानसे त्यादावेतदेव मालारूपं चतुर्दशलोकवल्लिकंद इत्यत्राश्लिष्टवाचकं केवलपरंपरितं पर्यंको राज्यलक्ष्म्या इत्यादावालानं जयकुंजरस्ये
त्यादौ चाश्लिष्टवाचकं मालापरंपरितं च द्रष्टव्यम् विस्तरभयान्नेह प्रपंच्यते॥ इत्यलंकारचंद्रिकायां रूपकप्रकरणम् परिणामं लक्षयति परिणाम इति विषयिनिष्ठापाः

प्रकृतकार्योपयोगिताया अवच्छेदिकाविषयतात्मतापरिणतिः परिणामः साचविषयतादात्म्याध्यवसायविषयता एवंच विषयाभेदस्यैव विषयिणि विवक्ष
णात् दृगभिन्नेनाब्जेनेतिस्वारसिक एव बोधः नतुरूपक इवदृङ्गिष्ठाभेदप्रतियोगिनाब्जेनेत्यनुयोगित्वमुख इतिरूपकाद्भेदोबोध्यः॥ असमासेप्युदाहरति तीर्त्वे
ति मुरारिनाटकगतमेतत्पद्यं आत्मनातृतीयः सीतालक्ष्मणसहित इतियावत् असौप्रक्रांतोरामः भूतेशस्य शंभोर्मौलिमालारूपाममरनदीं गंगांतीर्त्वा

यत्रारोप्यमाणोविषयी किंचित्कार्योपयोगित्वेन निबध्यमानः स्वतस्तस्यतदुपयोगित्वासंभवात्प्रकृतात्मतापरिणतिमपेक्षते तत्रपरिणामा
लंकारः अत्रोदाहरणं प्रसन्नेनेति अत्रहि अब्जस्यवीक्षणोपयोगित्वं निबध्यते नतुदृशः मयूरव्यंसकादिसमासेन उत्तरपदार्थप्राधान्या
त् नचोपमितसमासाश्रयणेन दृगब्जमिवेतिपूर्वपदप्राधान्यमस्तीतिवाच्यं प्रसन्नेनेतिसामान्यधर्मप्रयोगादुपमितंव्याघ्रादिभिःसा
मान्याप्रयोगइतितदप्रयोग एवोपमितसमासानुशासनात् अब्जस्यवीक्षणोपयोगित्वं नस्वात्मनासंभवति अतस्तस्यप्रकृतदृगात्मनापरिण
त्यपेक्षणात्परिणामालंकारः। यथावा तीर्त्वाभूतेशमौलिस्रजममरधुनीमात्मनासौतृतीयस्तस्मैसौमित्रिमैत्रीमयमुपकृतवानातरंनाविका
य व्यामग्राह्यस्तनीभिः शबरयुवतिभिःकौतुकोदंचदक्षंकृच्छ्रादन्वीयमानः क्षणमचलमथोचित्रकूटंप्रतस्थे अत्रारोप्यमाणआतरः सौ
मित्रिमैत्रीरूपतापत्त्या गुहोपकाररलक्षणकार्योपयोगीनस्वात्मना गुहस्यरघुनाथप्रसादैकार्थित्वेन वेतनार्थित्वाभावादितिपरिणामालंकारः

तस्मैनाविकाय गुहसंज्ञायनिषादपतये सौमित्रेर्लक्ष्मणस्यमैत्रीरूपमातरं तरणमूल्यमुपकृतवान् उपकाररूपतयादत्तवान् अथोऽनंतरं चित्रकूटंप्रतिप्र
तस्थेप्रस्थितवान् कीदृशः व्यामेनतिर्यक्प्रसारितभुजद्वयांतरालेन ग्राह्यौ तावत्परिणाहौ स्तनौयासांतथाभूताभिः शबराणांव्याधानांयुवतिभिः कौतुकेनोदं राम
चंतिविकसंत्यक्षीणि यत्रक्रियायांतथा कृच्छ्रात्क्लेशादतएवक्षणमन्वीयमानोऽनुगम्यमानइत्यर्थः॥ ॥इतिपरिणामप्रकरणम्॥ ॥छ॥ छ॥ १३

अथोल्लेखालंकारं लक्षयति बहुभिरिति एकस्य बहुधोल्लेखादित्यन्वयः उल्लेखनं विषयीकरणमुल्लेखः हेतौ पंचमी तथा चैवं विधोल्लेखाद्धेतोरुल्लेख इष्यते
उल्लेख इति व्यवह्रियत इत्यर्थः व्यवहारं प्रति लक्षणस्य प्रयोजकत्वात् स्त्रीभिरिति स्वर्द्रुः स्वर्गसंबंधी द्रुमः कल्पतरुः कालो यमः स प्रकृतो राजा म्लोकं व्याचष्टे
यत्रेति नानाविधेति सौंदर्यदातृत्वशूरत्वादिरूपेत्यर्थः तत्तद्धर्मेति रुच्यर्थित्वभयादिरूपेत्यर्थः एतच्च स्वरूपकथनं न तु लक्षणांतर्गतं नन्विद्धाभ्यां गृहीतृभ्यां
निमित्तद्वयवशात्प्रकारद्वयेनोल्लेखे ऽव्याप्तिरत आह अनेकेनेत्यादि तथा च लक्षणे बहुपदमनेकपरमिति भावः एवं च ग्रहीतृविषयाद्यन्यतमानेकत्वप्रयुक्त
मेकस्योल्लिख्यमानानेकप्रकारत्वमुल्लेख इति लक्षणं बोध्यम् सौंदर्यस्य तरंगिणीत्यादिमालारूपकवारणायाद्यं विशेषणं तत्र गृहीतृभेदप्रयुक्तं नानेकप्रकार
त्वमिति नातिव्याप्तिः वक्ष्यमाणोल्लेखप्रभेदसाधारण्यायान्यतमत्वप्रवेशः तद्विवेचनं तद्व्याख्यानावसरे करिष्यामः अन्यतमानेकत्वप्रयुक्तमेकस्योल्लि

बहुभिर्बहुधोल्लेखादेकस्योल्लेख इष्यते स्त्रीभिः कामो ऽर्थिभिः स्वर्द्रुः कालः शत्रुभिरैक्षि सः यत्र नानाविधधर्मयोग्यमेकं वस्तु तत्तद्धर्मयोगरूपनिमि
त्तभेदेन अनेकेन ग्रहीत्रा अनेकधोल्लिख्यते तत्रोल्लेखः अनेकधोल्लेखने रुच्यर्थित्वभयादिकं यथार्हं प्रयोजकं रुचिरभिरतिः अर्थित्वं लिप्सा ।

ख्यमानत्वमित्येतावदुक्तौ विद्याविक्रमसौंदर्यतपसां निधिमागतं पश्यंति विबुधाः शूराः स्त्रियो वृद्धाश्च कौतुकादित्यत्रातिव्याप्तिरतो ऽनेकप्रकारत्वमित्युक्तं
न चोल्लिख्यमानप्रकारत्वमित्येवास्तु उक्तोदाहरणे प्रकारस्यैकस्याप्यनुल्लेखादेवानतिप्रसंगादिति वाच्यं एवमपि नृत्यत्त्वद्वाजिराजिप्रसरखुरपुटप्रोद्ध
तैर्धूलिजालैरालोकालोकभूमीधरमतुलनिरालोकभावं प्रयाते विश्रांतिकामयंते रजनिरिति धिया भूतले सर्वलोकाः कोकाः क्रंदंति शोकानलविकलतया
किंचनेदंत्युलूकाइत्यत्र धूलिजालरूपस्यैकस्य वस्तुनो ऽनेकैर्लोककोकोलूकैर्ग्रहीतृभिरेकेनैव रजनीत्वेन प्रकारेणोल्लेखनादतिव्याप्तिर्वारणाय प्रकारे ऽनेक
त्वोपादानस्यावश्यकत्वात् सिंजानैर्मंजरीति स्तनकलशयुगं चुंबितं चंचरीकैस्त्त्रासोल्लासलीलाः किसलयमनसा पाणयः कीरदृष्टाः तल्लोपायालपंत्यः

कु॰ नं॰ पिकनिनदधियाताडिताः काकलोकैरित्यंचोलेंद्रसिंहत्वदरिमृगदृशांनाप्यरण्यंशरण्यमित्यनेकगतभ्रांतिपरंपरायामतिप्रसंगवारणार्थमेकस्येत्युक्त
चं॰ टी॰ मितिसंक्षेपः। यथाहमिति स्त्रीभिः कामत्वोल्लेखे ताः सारुचिरनुरागः प्रयोजकः अर्थिभिः कल्पतरुत्वोल्लेखे तेषां लिप्साप्रयोजिका शत्रुभिर्यमत्वोल्ले
१४ खे तेषां भयंप्रयोजकमित्येवं यथायोग्यमित्यर्थः उदाहरणांतरमाह यथावेति श्रीकृष्णस्य मथुराप्रवेशवर्णनं शौरिः श्रीकृष्णः वृद्धाभिर्जगत्रातेति दृ
ष्ट इत्याद्यन्वयाः सकौतुकं सोत्कंठमिति दर्शनक्रियाविशेषणं सर्वत्र संबध्यते श्लोकं व्याचष्टे यद्वेति तथा महाग्राहग्रहणेन युवतिसमूहैः तरुणीसमू

स्त्रीभिरित्याद्युदाहरणं अत्रैक एव राजा सौंदर्यवितरणपराक्रमशालीनि कृत्वा स्त्रीभिरर्थिभिप्रत्यर्थिभिश्च स्वरुच्यर्थितभयैः कामकल्पतरु
कालरूपो दृष्टः। यथावा गजत्रातेति वृद्धाभिः श्रीकांतइति यौवतैः यथास्थितश्च बालाभिर्दृष्टः शौरिः सकौतुकं। अत्र यस्त्राभीतं भक्तं
गजं त्वरया त्रायते स्म सो यमादिपुरुषोत्तम इति वृद्धाभिः संसारभीत्या तदभयार्थिनीभिः कृष्णो यं मथुरापुरं प्रविशन् दृष्टः यस्तथा चदल
त्वेन प्रसिद्धायाः श्रियोपि कामोपचारवैदग्ध्येन नित्यवल्लभः सो यं दिव्ययुवेति युवतिसमूहैः सोत्कंठैर्दृष्टः बालाभिस्तद्वाल्यगतरूपवेषा
लंकारदर्शनमात्रलालसाभिर्यथास्थितवेषादियुक्तो दृष्ट इति बहुधोल्लेखः पूर्वः कामत्वाद्यारोपरूपकसंकीर्णः अयं तु शुद्ध इति भेदः एकेन
बहुधोल्लेखेप्यसौ विषयभेदतः गुरुर्वचस्यर्जुनोयं कीर्त्तौ भीष्मः शरासने गृहीतृभेदाभावेपि विषयभेदाद्बहुधोल्लेखनादसावुल्लेखः ॥

हैः पूर्वमिति उदाहृत इति शेषः उल्लेख इत्यनुषज्यते आरोपरूपकसंकीर्ण इति पाठे आरोपस्वरूपं यद्रूपकं तत्संकीर्ण इत्यर्थः। आरोपरूपरूपकेति पाठस्तुस्प
ष्टार्थ एव उल्लेखप्रभेदांतरमाह एकेनेति व्याचष्टे गृहीत्रिति विषयभेदादित्यनंतरमेकस्येति शेषः विषयपदमाश्रयसंबंधिनोरुपलक्षणं अत एव लक्षणे गृ राम
हीतृविषयादीत्यादिपदेन तत्संग्रहः कृतः तत्र विषयसप्तमीनिर्दिष्टो विषय इत्युच्यते अधिकरणसप्तमीनिर्दिष्टस्त्वाश्रयः षष्ठ्यादिनिर्दिष्टः संबंधीति विवेकः १४

गुरुरित्यस्यार्थकथनंमहानिति गुरुर्महतिवाच्यवदितिविश्वकोशात् पटुरितितुतत्पर्यवसितार्थकथनं पटुर्दक्षइत्यादौ त्यादिनाकीर्त्तिविषयेः र्जुनोधव
लइतिवस्तार्थइत्यर्थान्तरस्यधनुर्विषयेभीष्मोभीषणइतिवत् गांगेयइत्यर्थान्तरस्यचसंग्रहः भीष्मस्तुभीषणेरुद्रेगांगेयेचनिशाचरइतिविश्वः क्रोडीकर
णात् एकवृंतगतफलद्वयन्यायेनसंग्रहात् अकृशमिति कपालिनोहरस्यभागधेयंभोग्यंतत्वेनाध्यवसितंपार्वतीस्वरूपंचित्तेआविरस्तुप्रकटीभवत्वि
तिसंबंधः किंभूतंकुचयोः कुचविषयेअकृशंस्थूलं एवमग्रेपिविलग्नेमध्यः विलग्नोमध्यलग्नयोरितिविश्वः विपुलंआयतं अधरे अधरोष्ठेअरुणमा
रक्तं अरुणाधरमितिपाठस्तुप्रक्रमभंगादयुक्तः चित्तेइतिकरुणाशालीत्यत्रापिमध्यमणिन्यायेनसंबध्यते एवंतुषारास्तापसव्राततामसेषुचतापिनः
द्विगतास्ताडकाशत्रोर्भूपासुमेमभूतयइत्यादावधिकरणानेकत्वप्रयुक्तः यमःप्रतिमहीभृतांहुतवहोसितन्नीरुतांसतारवसुयुधिष्ठिरोधनपतिर्धनाकांक्षिणां ग्र

उदाहरणंश्लेषसंकीर्णवचोविषयेमहान्पटुरित्यादिवत् बृहस्पतिरित्याद्यर्थांतरस्यापिक्रोडीकरणात् भुक्त्योयथा अकृशंकुचयोः [illegible]
रुशंविलग्नेविपुलंचक्षुषिविस्तृतंनितंबेअधरेरुणमाविरस्तुचित्तेकरुणाशालिकपालिभागधेयं स्यात्स्मृतिभ्रांतिसंदेहैस्त[illegible]लंकृति

हंशरणमिच्छतांकुलिशकोटिभिर्निर्मितंत्वमेकइह भूतलेबहुविधोविधात्राकृतइत्यादौसंबंधिभेदप्रयुक्तश्चोल्लेखोद्रष्टव्यइतिदिक् इत्यलंकारचंद्रिका
यामुल्लेखप्रकरणं अथज्ञानप्राधान्यसाम्यात्स्मृत्यादीनलंकारान्लक्षयति स्यादिति स्मृतिभ्रांतिसंदेहैर्व्यवहर्तव्यतयाहेतुभूतैस्तदंकंतेषामंकस्तदंकः
तदंकोविद्यते अस्मिन्तथाभूतंमत्वर्थीयाच्प्रत्ययात् अंकश्चिन्हंसंज्ञेतियावत् तेनतत्संज्ञासंज्ञितमित्यर्थः अलंकृतित्रयंव्यवहारविषयःस्यादितियो
जना एवंचस्मृतित्वभ्रांतित्वसंदेहत्वानित्रीणिलक्षणानि तत्रस्मृतित्वंतावत्स्मरामीत्यनुभवसाक्षिकोजातिविशेषः भ्रांतित्वंविशेष्यावृत्तिप्रकारक
ज्ञानत्वंसंदेहत्वंतुनिश्चयभिन्नत्वेसतिसंभावनाभिन्नज्ञानत्वंपारिभाषिकं स्मृतिभ्रांत्यादिवारणायसत्यंतं उत्प्रेक्षावारणायसंभावनाभिन्नेति ॥

कु०ने०
चं०टी०
१५

चमत्कारित्वंपुनरखिलालंकारसाधारणंलक्षणत्रयेपिनिवेशनीयं तेनसघटइतिस्मृनाविदंरजतमिति भ्रांतावयंस्थाणुःपुरुषोवेतिसंशयेनातिप्रसंगइति
ध्येयम् गाहतेआकलयतिस्मरतीतियावत् सादृश्यान्निबध्यमानैरितिचमत्कारित्वोपलक्षकं नत्वेतस्यापिस्वातन्त्र्येणलक्षणेप्रवेशः सादृश्यामूलका
नामपिस्मृत्यादीनांचमत्कारित्वेऽलंकारतायाअनिवार्यत्वात्चमत्कारितैकजीवातुत्वात्तस्याः अचमत्कारित्वेतुतेनैववारणमितिव्यर्थंसादृश्यहेतुक
त्वविशेषणं नचैतदेवोपादीयतांनतुचमत्कारित्वविशेषणमितिवाच्यं उदाहृतेषुसादृश्यमूलकस्मृत्यादिष्वतिप्रसंगवारणार्थंतस्यावश्यकत्वादितिसं
क्षेपः दिव्यानामिति माघेजलक्रीडावर्णनप्रस्तावेपद्यमिदं शौरिःश्रीकृष्णः अंभस्तःजलात् उत्तरंतींनिर्गच्छंतींश्रियमिवश्रीसदृशींकांचित्सुरस्त्री

पंकजंपश्यतःकांतामुखंमेगाहतेमनः अयंप्रमत्तमधुपस्त्वन्मुखंवेत्तिपंकजं पंकजंवासुधांशुर्वेत्यस्माकंतुननिर्णयः स्मृतिभ्रांति
संदेहैः सादृश्यान्निबध्यमानैःस्मृतिमान्भ्रांतिमान्संदेहइतिस्मृत्यादिपदांकितमलंकारत्रयंभवति तच्चक्रमेणोदाहृतं यथा वा १
दिव्यानामपिकृतविस्मयांपुरस्तादंभस्तःस्फुरदरविंदचारुहस्तां उद्वीक्ष्यश्रियमिवकांचिदुत्तरंतीमस्मार्षीज्जलनिधिमथनस्यशौरिः
पूर्वत्रस्मृतिमदुदाहरणेसदृशस्यैवस्मृतिरत्रसदृशलक्ष्मीस्मृतिपूर्वकंतत्संबंधिनाजलनिधिमंथनस्यापिस्मृतिरितिभेदः पलाशमुकु
लभ्रांत्याशुकतुंडेपतत्यलिः सोपिजंबूफलभ्रांत्यातमलिंधर्त्तुमिच्छति अत्रान्योन्यविषयभ्रांतिनिबंधनःपूर्वोदाहरणाद्विशेषः ॥ ॥

दग्रेउद्वीक्ष्यजलनिधिमथनस्यअस्मार्षीत्स्मृतवान् अधीगर्थेतिकर्मणिषष्ठी किंभूतां दिविभवादिव्यास्तेषांदेवानामपिसौंदर्यातिशयेनकृताश्चर्यां तथास्फुर
ता अरविंदेनकमलेनचारुःरमणीयःहस्तोयस्यास्तथाभूतां तथाचैवंविधनायिकासदृशलक्ष्मीस्मरणात्तत्संबंधिजलनिधिमंथनस्मरणमितिभावः अत्र
श्रियमिवेत्युपमायाःस्मृत्यंगत्वात्तयोरंगांगित्वलक्षणःसंकरः पलाशेति विक्रमलोहितरूपसादृश्याद्भ्रांतिः अलिःभ्रमरःसोपिशुकोपिभ्रांतिनिबन्धनइति

जीवनेतिजीवनंजलंप्राणसंयोगश्च अथवा जीवंतेनेनेति जीवनंधनं नम्रा अधोमुखाः विनीताश्च उन्नताः ऊर्ध्वमुखाः उद्धताश्च घटीयंत्रं एकरज्जुसं
बद्धघटमालारूपंभाषायांराहटइतिप्रसिद्धं कल्पितेति घटीयंत्रसंबंधिनोर्ज्येष्ठकनिष्ठयोः कोट्योरप्रसिद्धेरितिभावः इत्यलंकारचंद्रिकायांस्मृतिभ्रां
तिसंदेहप्रकरणम् अथापन्हुतिः तत्रतावद्भेदप्रतिपत्तिनिरूपितांगांगित्वान्यतरवान्निषेधोपन्हुतिरित्यपन्हुतिसामान्यलक्षणं निषेधश्चनञादि
सत्वेवाच्यः क्वचित्तुतदभावात्कैतवादिपदैःपरमतत्वोपन्यासादिभिश्चव्यंग्यः तथाक्वचिदभेदप्रतिपत्तिसमानाधिकरणः क्वचित्तुतद्व्यधिकरणइतिवि
वेकः एवमभेदः क्वचिदारोप्यमाणः क्वचित्तुस्वाभाविकः एवंतत्प्रतिपत्तिरपिक्वचित्व्यंजनया प्रायशस्तुवाच्यवृत्त्येतिबोध्यम् निषेधोऽपन्हुतिरित्ये
तावदुक्तौनद्यूतमेतत्कितवक्रीडनंनिशितैः शरैरितिप्रसिद्धनिषेधानुवादरूपेप्रतिषेधालंकारेतिव्याप्तिरतोऽभेदप्रतिपत्तिनिरूपितेत्यादिविशेषणमु

जीवनग्रहणेनम्नागृहीत्वापुनरुन्नताः किंकनिष्ठाः किमुज्येष्ठाघटीयंत्रस्यदुर्जनाः पूर्वोदाहृतसंदेहः प्रसिद्धकोटिकः अयंतुकल्पित
कोटिकइतिभेदः शुद्धापन्हुतिरन्यस्यारोपार्थोधर्मनिन्हवः नायंसुधांशुःकिंतर्हिव्योमगंगासरोरुहं ११ पात्तं तत्रहियुद्धप्रवृत्तंकितवं

प्रतियुद्धेद्यूतत्वाभावोनिर्ज्ञातोपिकीर्त्यमानोद्यूतएवतवप्रगल्भ्यंनतुयुद्धइत्युपहासार्थोनतुशुद्धाभेदप्रतिपत्त्यंगं तस्यास्तदुपन्यासंविनापिसिद्धत्वा
त् नाप्यंगिभूतःनिर्ज्ञाततत्वेनतदुपायानपेक्षणादितितद्वारणं अभेदप्रतिपत्तिनिरूपितांगित्वमात्रोक्तौशुद्धापन्हुतिहेत्वपन्हुतिपर्यस्तापन्हुतिकैतवापन्हु
तिष्वव्याप्तिः तत्रसर्वत्रनायंशुद्धांशुरित्यादेर्निषेधस्यव्योमगंगासरोरुहाद्यभेदप्रतिपत्त्यर्थत्वेनतदंगतयांगित्वाभावात् अभेदप्रतिपत्तिनिरूपितांगत्वे
मात्रोक्तौचभ्रांतापन्हुतिछेकापन्हुत्योरव्याप्तिः तयोर्भ्रांतिशंकानिवारणरूपनिषेधस्यप्राधान्येनाभेदप्रतिपत्त्यंगत्वाभावादतस्तदन्यतरवत्वनिवेशः
तदाहुः साम्यायापन्हवोयत्रसाविज्ञेयात्वपन्हुतिः अपन्हवायसादृश्यंयस्मिन्नेषाप्यपन्हुतिरिति सर्वंचैतत् तत्तदुदाहरणव्याख्यानावसरेस्फुटीभवि

कु·नं· एवंसामान्यलक्षणंमनसिनिधायशुद्धापन्हुत्यादींस्तद्भेदान्वक्तुमुपक्रमतेशुद्धापन्हुतिरिति लक्षणंव्याचष्टे वर्णनीयइति कविमतेर्विकासः स्फूर्त्तिशालि
चं·टी तातथाचोपमेयउपमानारोपफलकउपमेयधर्मत्वाभिमतनिषेधःशुद्धापन्हुतिरितिलक्षणमितिभावः अत्रचानुक्तनिमित्तत्वंकैतवादिपदाव्यंग्यत्वंच
१९ निषेधविशेषणंबोध्यम् तेनहेत्वपन्हुतौकैतवापन्हुतौचनातिप्रसंगः कांतः किंनहिनूपुरइतिछेकापन्हुतौउपमेयधर्मस्यकांतत्वस्यनिषेधसत्वात्तत्प्र
संगवारणायाद्यंविशेषणं तत्रहिनकांतत्वनिषेधोनूपुरारोपार्थोऽपितुनूपुरारोपएवशंकितकांतत्वनिषेधार्थइतितद्व्यावृत्तिः पर्यस्तापन्हुतिवारणाः
योपमेयधर्मेत्युक्तंतत्रोपमानधर्मस्यैवसुधांशुत्वादेर्निषेधइतिनातिव्याप्तिरितिसर्वंसुस्थं पुंडरीकेति पुंडरीकंसितांभोजमित्यमरः एवंचसरोरुहपदंवि

वर्णनीयेवस्तुनितत्सदृशधर्मारोपफलकस्तदीयधर्मनिन्हवः कविमतिविकासोत्प्रेक्षितधर्मांतरस्यापिनिन्हवःशुद्धापन्हुतिः यथाचंद्रेवि
यन्नदीपुंडरीकत्वारोपफलकस्तदीयधर्मस्यचंद्रत्वस्यापन्हवः यथावा अंकंकेपिशशंकिरेजलनिधेःपंकंपरेमेनिरेसारंगंकतिचिच्चसंज
गदिरेभूछायमैछन्परे इंदौयद्दलितेंद्रनीलशकलश्यामंदरीदृश्यतेतत्सांद्रंनिशिपीतमंधतमसंकुक्षिस्थमाचक्ष्महे अत्रोत्प्रेक्षिकधर्मा
णामप्यपन्हवः परपक्षत्वोपन्यासादर्थसिद्धः

(( शेषपरमितिभावः अंकमिति इंदौदलितस्यस्फुटितस्येंद्रनीलमणेः शकलवत् श्यामंयद्द
रीदृश्यतेतत्केपिकवयः अंककलंकंशशंकिरेशंकितवन्तः परेऽन्येजलनिधेःपंकंमेनिरेकतिचित्पुनः सारंगंसंजगदिरे अब्रुवन् परेइतरेभुवःभूमेश्छा
याभूछायंऐछन् विभाषासेनासुराछायेत्यादिनाक्लीबत्वं वयंतुसांद्रंघनंनिशिरात्रौपीतं अतएव कुक्षिस्थमंधतमसंगाढध्वांतंआचक्ष्महेब्रूमहे इ
त्यन्वयः औत्प्रेक्षिकाः उत्प्रेक्षामात्रविषयाः कलंकादयः अपिनास्वाभाविकस्यभूछायत्वस्यसमुच्चयः अर्थसिद्धइति नायंसुधांशुरित्यत्रनेतिश राम
ब्दोपात्तत्वाच्छाब्दः इहतुपरमतत्वोत्कीर्त्तनेनस्वानभिमतत्वसूचनादर्थगम्यइत्यर्थः एकत्रानेकापन्हवरूपतयाप्यत्रवैचित्र्यंबोध्यम् ७॥ ॥ १९

हेत्वपन्हुतिमाह। सएवेति शुद्धापन्हवएवेत्यर्थः युक्तिपूर्वइति योज्यनेसाध्यमनेनेतियुक्तिर्हेतुः तत्पूर्वस्तत्सहित इत्यर्थः तथाचशुद्धापन्हवलक्षणएवानुक्त
निमित्तइत्यस्यस्थानेउक्तनिमित्तइत्युक्तौ हेत्वपन्हुतिलक्षणंसंपद्यतइतिभावः नेंदुरित्यादिविरहाकुलोक्तिः तीव्रोदारुणोयतः अतो नेंदुःनिशिरात्रौस
त्वान्नार्कः और्वस्तुवडवानलइत्यमरः नैशत्वेति निशिभवोनैशस्तत्त्वमित्यर्थः अत्रापिचंद्रत्वंस्वाभाविकोधर्मः सूर्यत्वंत्वौत्प्रेक्षिकमितिबोध्यम् मंथाने
ति मंथानोमंथनदंडः सचासौभूमिधरः पर्वतोमंदरस्तस्यमूलभारोयत्शिलासहस्रंतेनसंघट्टनाद्योव्रणस्तस्यकिणश्चिन्हमिंदुमध्येस्फुरतिप्रकाशतेछा

सएवयुक्तिपूर्वश्चेदुच्यतेहेत्वपन्हुतिः नेंदुस्तीव्रोननिश्यर्कः सिंधोरौर्वोयमुत्थितः अत्रचंद्रएवतीव्रत्वनैशत्वयुक्तिभ्यांचंद्रत्वसूर्यत्वा
पन्हवोवडवानलत्वारोपार्थः यथावा मंथानभूमिधरमूलशिलासहस्रसंघट्टनव्रणकिणः स्फुरतींदुमध्ये छायामृगः शशकइत्यति
पामरोक्तिस्तेषांकथंचिदपितत्रहिनप्रसक्तिः अत्रचंद्रमध्येमंथनकालिकमंदरशिलासंघट्टनव्रणकिणस्यैवछायादीनांसंभवोनास्तीति
छायात्वाद्यपन्हवःपामरवचनत्वोपन्यासेनाविष्कृतः। अन्यत्रतस्यारोपार्थः पर्यस्तापन्हुतिस्तुसः नायंसुधांशुःकिंतर्हिसुधांशुःप्रेयसीमु
खं यत्रक्वचिद्वस्तुनितदीयधर्मनिन्हवः अन्यत्रवर्णनीयेवस्तुनितस्यधर्मस्यारोपार्थः पर्यस्तापन्हुतिः यथाचंद्रेचंद्रत्वनिन्हवोवर्णनीये

याभूमेःमृगोहरिणःशशकःशशइत्येषाअतिपामराणांमूर्खतमानामुक्तिःहियस्मात्तेषांछायादीनांतत्रइंदुमध्यभागेकथंचिदपिकेनापिप्रकारेणप्रसक्तिर्नास्ती
त्यन्वयः वैशाखमंथमंथानमंथानोमंथदंडकेइत्यमरः। नास्तीतीति इतिहेतोरित्यर्थः पर्यस्तापन्हुतिमाह अन्यत्रेति सःअपन्हवः तथाचतदारोपार्थस्तस्या
पन्हवइतिलक्षणं निषेधस्यचनस्वाधिकरणेप्रतियोग्यारोपार्थत्वसंभवोनवास्वाधिकरणेस्वारोपइत्यर्थसिद्धमेवारोपस्यान्याधिकरणत्वमन्यत्रेत्यनेनोक्तं
अतएवपर्यस्तापन्हुतिरित्युच्यते पर्यस्ता आरोपविपरीताआरोपव्यधिकरणेतितदर्थात् नचचंद्रेचंद्रत्वनिषेधस्यकथंमुखेतदारोपार्थत्वमितिवाच्यम् ॥

आरोपस्य दार्ढ्यसंपादकत्वेन निषेधस्य तदर्थतायाअनुभवसिद्धत्वात् अतएवदृढारोपरूपकमेवेदंनापन्हुतिरितिप्राचांसिद्धांतस्तदनुसारेणैव चन्द्रिकामीमांसायांप्रकृतस्यनिषेधेन यदन्यत्वप्रकल्पनमित्यपन्हुतिलक्षणमुक्तं इहत्वलंकाररत्नाकराद्यनुसारेणायंप्रभेद उपदर्शितसामान्यलक्षणाभिप्रायेणापन्हुतित्वेनोक्त इतिनिरवद्यं॥ हालाहलइति हालाहलोविषंनैवभवति किंतुरमालक्ष्मीर्विषं जनाःपरंकेवलमत्रास्मिन्विषयेव्यत्ययंवैपरीत्यंमन्वतेअभ्युपगच्छंति कुतस्तत्राह यस्मात्शिवस्तंहालाहलं निपीयसुखेनजागर्त्तिहरिस्तु इमांरमांस्पृशन्सन्निद्रयामुह्यतिस्मरन्नितिपाठेस्मरन्नपिमुह्यतिकिंपुनःस्पृशन्नित्यर्थः तथाचरमायाविषरूपत्वेमोहजनकत्वंहेतुःहालाहलस्यतत्वापन्हवे चजागरसुखप्रयोजकत्वमितिबोध्यम् हालाहलोविषेइतिविश्वः अत्र

यथावा हालाहलोनैवविषंविषंरमाजनाःपरंव्यत्ययमत्रमन्वते निपीयजागर्तिसुखेनतंशिवःस्पृशन्निमांमुह्यतिनिद्रयाहरिः पूर्वोदाहरणेहेतूक्तिर्नास्ति अत्रतुसास्तीतिविशेषः ततश्चपूर्वापन्हुतिवदत्रापिद्वैविध्यमपिद्रष्टव्यम् भ्रांतापन्हुतिरन्यस्यशंकायांभ्रांतिवारणे तापंकरोतिसोत्कंपज्वरःकिंनसखिस्मरः अत्रतापंकरोतीतिस्मरवृत्तांतेकथितेतस्यज्वरसाधारण्याद्दृजुबुध्यासख्याज्वरःकिमितिपृष्टेनसखिस्मरइतितत्वोक्त्याभ्रांतिवारणंकृतं यथावा नागरिकसमधिकोन्नतिरिहमहिषःकोयमुभयतःपुच्छः

स्पृशन्मुह्यतीतिकार्यकारणयोःपौर्वापर्य्यविपर्ययरूपातिशयोक्तिरलंकारः साहेतूक्तिः ततश्चेति हेतूक्तितदनुक्तिरूपभेदादित्यर्थः पूर्वापन्हुतिवत् शुद्धापन्हुतिवत् द्वैविध्यं शुद्धपर्यस्तापन्हुतिः हेतुपर्यस्तापन्हुतिरित्येवंद्विप्रकारत्वं भ्रांतापन्हुतिरिति अन्यस्य प्रकृतस्य भ्रांतिवारणेवार्यतेऽनेनेतिवारणं तथाचभ्रांतिवारकेतत्वाख्यानेसतीत्यर्थः भ्रांतभ्रमःभावेक्तः भ्रांत्यपन्हुतिरित्यर्थः एवंचतत्वकथनहेतुकभ्रांतिविषयनिषेधोभ्रांतापन्हुतिरितिलक्षणंबोध्यं तस्य तापकारित्वरूपस्मरवृत्तांतस्य नागरिकेति नगरेभवोनागरिकस्तंप्रतिग्रामीणस्यप्रश्नः समधिकापश्चांतरेभ्यःउन्नतिरुच्चतायस्यैवंभूतउभयतःमुखपृष्ठभागयोः

नहिनहीत्युत्तरंमहिषइत्यनुषज्यते अयंकरिकलभः करिशावकः कलभः करिशावकइतिशोकात्कलभइत्येतावतैवसिद्धेकरिपदमुत्कृष्टकरिबोधार्थं अय
मस्यशुंडादंडोनतुपुच्छमिति पुच्छइतिपाठोप्ययंर्द्धचोदित्वात्साधुरेव अप्रयुक्तत्वंतु तत्रपरंविचार्यमिति पूर्वोदाहरणे संदेहरूपभ्रांतिविषयज्वरत्वाप
न्हवःज्वरःकिमितिप्रश्नेनतद्विषयसंदेहावगमात् इहतुमहिषत्वनिश्चयरूपभ्रांतिविषयस्यमहिषत्वस्येति ततोभेदः जटेतिविरहिण्याइयमुक्तिः हेकु
सुमशरपुराराते हरस्यभ्रांत्यामांकिंकुतः प्रहरसिपीडयसि यतोनेयंजटाकिंतुवेणीकृतः अवेणीवेणीसंपद्यतेतथाकृतः कचानांकलापः तथागलेगरलं
नैतदपितुइयंकस्तूरी एवंशिरसिनैषाशशिलेखाकिंतुकुसुमं तथाइयमंगेभूतिर्भस्मनभवतिपरंतुप्रियविरहाज्जन्मायस्यैवंभूतोधवलिमापांडिमेति अ

नहिनहिकरिकलभोयंशुंडादंडोयमस्यनतुपुच्छं इदंसंभवद्भ्रांतिपूर्विकायांभ्रांतापन्हुताबुदाहरणम् कल्पितभ्रांतिपूर्वायथा जटानेयं
वेणीकृतकचकलापोनगरलंगलेकस्तूरीयंशिरसिशशिलेखानकुसुमं इयंभूतिर्नांगेप्रियविरहजन्माधवलिमापुराराति भ्रांत्याकुसुम
शरकिंमांप्रहरसि अत्रकल्पितभ्रांतिर्जटानेयमित्यादिनिषेधमात्रोन्नेयापूर्ववत्प्रश्नाभावात् दंडीत्वत्रतत्वाख्यानोपमेत्युपमाभेदं
मेने यदाह नपद्ममुखमेवेदंनभृंगौचक्षुषीइमे इतिविस्पष्टसादृश्यात्तत्वाख्यानोपमामतेति छेकापन्हुतिरन्यस्यशंकातस्तथ्यनिन्हवे

वर्ज्योबहुव्रीहिर्व्यधिकरणोजन्माद्युत्तरपदइतिवामनसूत्राद्व्यधिकरणोपिबहुव्रीहिर्नदुष्टः। कल्पितेति कुसुमशरेउत्प्रेक्षितेत्यर्थः निषेधमात्रोन्नेयेति नि
षेधस्यप्रसक्तिपूर्वकत्वादितिभावः मेनेइत्यस्वरसोद्भावनंतद्बीजंतूपमाबोधकस्येवादेरसत्वेपितदुपगमेरूपकस्याप्युपमात्वस्यादितिस्पष्टमेव छेका
पन्हुतिरिति छेकोविदग्धस्तत्कृताअपन्हुतिः छेकापन्हुतिरितिलक्ष्यनिर्देशः वाक्यान्यथायोजनहेतुकः शंकिततात्विकवस्तुनिषेधइतिलक्षणं अन्य
स्यशंकातइत्यन्यशंकायानिवर्त्तनीयत्वेनहेतुतयाव्यपदेशः संतापात्त्रातीतिवत् अत्रचस्फुटापन्हुतिवारणायाद्यंविशेषणंममकिलश्रुतिमाह तदर्थि

कु॰ नं॰ चं॰ टी॰ १८

कामित्यधिकताद्रूप्यरूपकवारणायशंकितेति नचानेनैवशुद्धापन्हुतिवारणाद्वाक्येत्यादिव्यर्थमितिवाच्यं कस्यवानभवेद्दोषः प्रियायासव्रणेधरे सभृंगं पद्ममाघ्रासीर्वारितापिमयाधुनेतिव्याजोक्तावतिप्रसंगवारकत्वेनतत्सार्थक्यात् यद्वक्ष्यति छेकापन्हुतेरस्याश्चायंविशेषोयत्तस्यावचनस्यान्यथानयनेनापन्हवः अस्यामाकारस्यहेत्वंतरवर्णनेनगोपनमिति तथ्यनिन्हवइति तात्त्विकनिषेधेइत्यर्थः नूपुरोमंजीरः मंजीरोनूपुरोऽस्त्रियामित्यमरः नर्मसखीक्रीडासखी अत्रकांतपरायाः प्रजल्पन्मत्पदेलग्नइत्युक्तेनूपुरःतात्पर्यकत्ववर्णनेनकांतत्वापन्हवोमुख्यः नूपुराभेदप्रतिपत्तिस्तु तदंगमितिबोध्यं सीत्कारमिति सीत्कारंतदनुकारिसुखध्वनिंशिक्षयति अधरंअधरोष्ठंव्रणयति व्रणोस्यास्तीति व्रणीव्रणिनंकरोतीत्यर्थे तत्करोतीतिणिच् तथारो

प्रजल्पन्मत्पदेलग्नः कांतः किंनहि नूपुरः कस्यचित्कंचित्प्रति रहस्योक्तावन्येनश्रुतायामुक्तेस्तात्पर्यांतरवर्णनेनतथ्यनिन्हवेछेकापन्हुतिः यथानायिकयानर्मसखींप्रतिप्रजल्पन्मत्पदेलग्नइतिस्वनायकवृत्तांतेनिगद्यमानेतदाकर्ण्यकांतः किमितिशंकितवतीं अन्यांप्रतिनूपुरइतिनिन्हवः सीत्कारंशिक्षयतिव्रणयत्यधरंतनोतिरोमांचं। नागरिकः किंमिलितोनहिनहिसखिहैमनः पवनः॥ इदमर्थयोजनयातथ्यनिन्हवेउदाहरणं शब्दयोजनयायथा ९९ मांचंतनोतिविस्तारयतीति वाक्यत्रयंनागरिकाभिप्रायेणप्रियसखींप्रतिकयाप्युक्तं तदाकर्ण्यनागरिकः किं मिलितइतिशंकितवतीमन्यांप्रतितच्छंकानिवृत्तये नहीत्यादिनाहैमंतिकपवनपरत्ववर्णनेनतात्त्विकस्यनागरिकस्यापन्हवः सीत्कारशिक्षादिकर्तृत्वस्यनागरिकइवपवनेपिसत्वात् तदाह अर्थयोजनयेति विवक्षिताविवक्षितसाधारणस्यार्थस्याविवक्षितार्थसंबंधित्ववर्णनयेत्यर्थः। इदमित्युदाहरणमितिचजात्यभिप्रायेणैकवचनम् हेमन्तशब्दात्तत्रभवइत्यर्थेसर्वत्राण्चतलोपश्चेत्यणितलोपेचहैमनइतिरूपसिद्धिः प्रजल्पन्नित्युदाहरणेएकस्यवाक्यस्यान्यथायोजनमिहत्वनेकेषामितिभेदः शब्दयोजनयेति अर्थभेदेपिशब्दश्लेषमात्रेणेत्यर्थः॥ राम॰ १८

पद्येति क्रीडयाविटोभोक्ताकृष्णोवोयुष्मान् पातुरक्षत्वितिसंबंधः कीदृशइति उत्स्वप्नवचः स्वप्नेउद्गतमुत्स्वप्नंवचनमर्थात्कृष्णस्यअनुभाष्य अनुद्यराधयानिर्भर्त्सितः सन् तद्वचनंतत्परमेवराधापरमेवव्यपदिशन् कथयन् इतिकिं हेपद्मेरमेत्वन्नयनेसततस्मरामि नीलेभवत्याः कुंतलेकेशपाशेममभावोंतःकरणवृत्तिरूपः मुह्यतिमोहंप्राप्नोति ननुचिन्तासंगोनिवर्त्यतांतत्राहकिंकरोमि अकिंचित्करोस्मियतस्तेनवमहितैः पूज्यैः विभ्रमैर्विलासैः क्रीतोस्मिमूल्येनगृहीतोस्मीति किंकरोस्मीतिक्वचित्पाठोयुक्ततरः तत्रदासोस्मीत्यहमर्थकमव्ययं अहंकिंकरोदासः क्रीतोस्मीत्यर्थः राधापरत्वेतुहेराधेइत्यर्थात् संबोधनंपद्मरूपेत्वन्नयनेस्मरामीतिविशेषः शेषंपूर्ववत् अत्ररमासंबोध्यकस्त्वन्नयनस्मरणरूपोनवाक्यार्थोऽपितुत्वत्संबोध्यकः पद्मरूपत्वन्नयनस्मरणरूप

पद्मेत्वन्नयनेस्मरामिसततंभावोभवत्कुंतलेनीलेमुह्यतिकिंकरोमिमहितैः क्रीतोऽस्मितेविभ्रमैः इत्युत्स्वप्नवचोनिशम्यसरुषानिर्भर्त्सितोराधयाकृष्णस्तत्परमेवतद्व्यपदिशन्क्रीडाविटः पातुवः सर्वमिदंविषयांतरयोजनेउदाहरणम् विषयैक्येप्यवस्थाभेदेनयोजनेयथावदंतीजारवृत्तांतंपत्यौधूर्तासखीधिया पतिंबुध्वासखिततः प्रबुद्धास्मीत्यपूरयत्। कैतवापन्हुतिर्व्यक्तौव्याजाद्यैर्निन्हुतेःपदैः निर्यांतिस्मरनाराचाः कांतादृक्पातकैतवात् ९९ इत्यपन्हवस्तत्परमेवतद्व्यपदिशन्नित्यनेनप्रकाश्यते नचात्रार्थस्यरमाराधासाधारणत्वमपितुपद्मेइतिलिंगवचनश्लिष्टशब्दयोजनैवेति विषयांतरेति विवक्षितविषयभिन्नेत्यर्थः। अवस्थाजाग्रत्स्वप्नादिरूपावदंतीति पत्यौभर्त्तरिसखीधियासखिभ्रमेणजारवृत्तांतंस्वकामुकवार्त्तांवदंतीधूर्ताकाचित्पतिंबुध्वासखीत्यादिवाक्यशेषमपूरयत् पूरितवती सखीतिपुनःसंबोधनमप्रतार्यतासूचनाय ततःउक्तवृत्तांतानंतरंप्रबुद्धाजागरणवती अत्रनासौजाग्रदवस्थावृत्तांतः किंतुस्वाप्निकइत्यवस्थाभेदयोजनयापन्हवः सखीत्यादिवाक्यशेषेणप्रकाश्यते कैतवापन्हुतिरितिलक्ष्यनिर्देशः व्याजाद्यैः पदैर्निन्हुतेर्व्यक्तौअभिव्यक्तौसत्यांकैतवापन्हुतिरितिव्यवहर्त्तव्यमित्यर्थः। कैतवेनापन्हुतिरितिव्युत्पत्तेः व्याजाद्यैरित्यनेन

एवंचकैतवादिपदव्यंग्यापन्हुतित्वंलक्षणंबोध्यम् नाराचाबाणाः दृक्पाताःकटाक्षाः अपन्हवःनिषेधःप्रतीयतइति असत्यत्वस्यविषयबाधाधीनत्वादि
तिभावः रिक्तेष्विति ग्रीष्मवर्णनं तरवोवृक्षाःवारिणोजलस्यकथयावार्त्तयाविरिक्तेषुशून्येषुविपिनस्यारण्यस्योदरेषुमध्यप्रदेशेषुजलंअर्थयंते प्रा
र्थयंतेकीदृशाः मध्यान्हेजृंभितःप्रवृद्धोयोमहानातपउष्णंतस्यतापस्तपनंतेनतप्ताःसंतप्ताः किंकृत्वास्कंधांतरात् प्रकांडाभ्यंतरादुत्थितोयोदवाग्निर्दावानलस्त
स्ययाशिखाज्वालातस्याःछलेनजिव्हाप्रसार्येति अस्त्रीप्रकांडःस्कंधःस्यान्मूलाच्छाखावधिस्तरोरित्यमरः अत्रनेयंदवाग्निशिखाअपितुजिव्हेतिछ
लपदात्प्रतीयते अत्रचानभिहितवाच्यतादोषनिरासायकथयापिवनोदरेष्वितिपठनीयं इत्यपन्हुतिप्रकरणम् उत्प्रेक्षांलक्षयति। संभावनेति अत्रो

अत्रासत्यत्वाभिधायिनाकैतवपदेननेमेकांताकटाक्षाः किंतुस्मरनाराचाइत्यपन्हवः प्रतीयते। रिक्तेषुवारिकथयाविपिनोदरेषुमध्या
न्हजृंभितमहातपतापतप्ताः स्कंधांतरोत्थितदवाग्निशिखाछलेनजिव्हांप्रसार्यतरवोजलमर्थयंते। संभावनास्यादुत्प्रेक्षावस्तुहेतुफ
लात्मना उक्तानुक्तास्पदाद्यात्रसिद्धासिद्धास्पदेपरे। धूमस्तोमंतमःशंकेकोकीविरहशुष्मणां लिंपतीवतमोंगानिवर्षतीवांजनंनभः रक्तौत
वांघ्रीमृदुलौभुविविक्षेपणाद्ध्रुवं १९ उत्प्रेक्षेत्यनंतरंसाचत्रिधेत्यध्याहार्यं तथाचसंभावनाउत्प्रेक्षापदवाच्यास्यात्साचवस्तुहेतुफलरूपेणत्रि धेत्य
र्थः। वस्तुहेतुफलानांचसंभावनाधर्मत्वंस्वविधेयकत्वसंबंधेन तेन वस्तुहेतुफलविधेयकत्वेनेतिपर्यवसितार्थः वस्तुत्वंचहेतुत्वेनफलत्वेनवाविवक्षितं य
त्तद्भिन्नत्वं नातोवस्तुत्वस्यकेवलान्वयितयाविभागसंगतिः उक्तेत्यादि अत्र आसामुत्प्रेक्षाणांमध्येआद्यावस्तूत्प्रेक्षाउक्ताचानुक्ताचोक्तानुक्तेआस्पदेयस्या
इतिविग्रहः आस्पदंचोत्प्रेक्षायाधर्मिरूपोविषयः सिद्धासिद्धेत्यत्रविग्रहःपूर्ववत् धूमेति तमःकोकीविरहशुष्मणांधूमस्तोमंशंकेइत्यन्वयः कोकस्यचक्र
वाकस्यस्त्रीकोकीतस्याविरहरूपाणांशुष्मणां अग्नीनांसंबंधिनंधूमसमूहमित्यर्थः लिंपतीवेति अत्रतमइतिनभइतिचकर्तृपदंरक्ताविस्यादिद्वयितांप्रतिनायक

तवमृदुलौसुकुमारावंघ्रीचरणौध्रुवंभुविविक्षेपणाद्धेतोः रक्तवर्णाविति त्वन्मुखेति पद्मगतायास्त्वन्मुखकांतेरिच्छयाहेतुनेत्यर्थः वैरायतइति वैरंकरोती
त्यर्थे शब्दवैरकलहाभ्रकण्वमेघेभ्यःकरणइतिक्यङ् मध्यइति मध्यभागः कुचयोर्धृत्यैधरणार्थंकनकस्यदामभिः रज्जुभिरितिनिगीर्याध्यवसानरूपाति
शयोक्त्यावलीभिःबद्धः किमित्यर्थः प्रायइति अब्जंकर्तृप्रायःबहुधात्वच्चरणेनसहैक्यंप्राप्तुंतोयेजलेतपस्यतितपश्चरतीत्यर्थः कर्मणोरोमंथतपोभ्यां
वर्त्तिचरोरितिक्यङ् तपसःपरस्मैपदंचेतिपरस्मैपदंलक्षणंपरिष्कुरुते अन्यधर्मेति अन्यस्यविषयिणोयोधर्मस्तत्संबंधरूपेणनिमित्तेन अन्यस्य
अन्यविषयकं अन्यस्यविषयिणः तादात्म्येनसंभावनमित्यर्थः अन्यस्येतिषष्ठ्यर्थोविषयताधर्मितारूपाविषयिणइतिषष्ठ्यर्थस्तुविशेषणतारूपा

त्वन्मुखाभेच्छयानूनंपद्मैर्वैरायतेशशी मध्यःकिंकुचयोर्धृत्यैबद्धःकनकदामभिः प्रायोब्जंत्वत्पदेनैक्यंप्राप्तुंतोयेतपस्यति। अन्यधर्म
संबंधनिमित्तेनअन्यस्यअन्यतादात्म्यसंभावनमुत्प्रेक्षा सावस्तुहेतुफलात्मतागोचरत्वेनत्रिविधा अत्रवस्तुनःकस्यचिद्वस्त्वंतरता
दात्म्यसंभावनाप्रथमास्वरूपोत्प्रेक्षेत्युच्यते अहेतोर्हेतुभावेनाफलस्यफलत्वेनोत्प्रेक्षाहेतूत्प्रेक्षाफलोत्प्रेक्षेत्युच्यते १९ विषयता अ
न्यत्वेनोक्तीनंचसंभावनायाआहार्यतासूचनाय तथाचविषयिनिष्ठधर्मसंबंधप्रयुक्तविषयधर्मिकंतादात्म्यसंसर्गेणविषयिविधेयकमाहार्यसंभावन
मुत्प्रेक्षेति पर्यवसितं तन्निष्ठधर्मसंबंधप्रयुक्तमाहार्यंतत्संभावनमितितुनिष्कर्षः इतरांशस्याव्यावर्त्तकतयास्वरूपकथनमात्रपरत्वात् मुखंचंद्रंमन्य
इत्युत्प्रेक्षायांचंद्रनिष्ठाल्हादकत्वादिधर्मसंबंधप्रयुक्तमुखेचंद्रसंभावनमाहार्यमस्तीतिलक्षणसमन्वयः बाधाद्यभावदशायांतुजायमानामुखादौचंद्रा
दिसंभावनानोत्प्रेक्षेतितद्वारणायाहार्येति एतेनविरक्तासंध्यापरुषंपुरस्ताद्यथारजःपार्थिवमुज्जिहीते शंकेहनूमत्कथितप्रवृत्तिःप्रत्युद्गतोमांभरतः
ससैन्यइत्यत्ररजोभरोद्गमनरूपससैन्यप्रत्युद्गतधर्मसंबंधप्रयुक्तायांभरतेतत्संभावनायामपिनातिव्याप्तिः तस्याअनाहार्यत्वात् संभावनंयदीत्थ

कु॰नं॰ स्यादित्सूह्योन्यस्यसिद्ध्यइतिवक्ष्यमाणसंभावनालंकारविषयेयदिशेषोभवेद्दृक्ताकथिताःस्युर्गुणास्तवेत्यादावतिव्याप्तिवारणायप्रयुक्तांतंसर्वातिशायि
चं॰टी॰ सौंदर्यशंकेसत्यवतोमुखं येनसामृगशावाक्षीसा वित्रीतरलीकृतेत्यादावतिप्रसंगवारणायतन्निष्ठेतिसंभाव्यमानवृत्तित्वंधर्मविशेषणंतत्रसावित्रीतरली
२० कारकत्वरूपोधर्मोमुखवृत्तिर्नतुसंभाव्यमानवृत्तिरितिनातिप्रसंगइतिदिक् वस्तुहेतुफलात्मता वस्तुहेतुफलतादात्म्य ननुसंबंधांतरेणोत्प्रेक्षायाअ
संग्रहइतिचेन्न सर्वत्राभेदेनैवोत्प्रेक्षणमितिप्राचीनमतानुसारेणेत्थमभिधानात् एतत्सूचनायैवलक्षणेऽत्रचतादात्म्योपादानमिति नन्वलंकारसर्व

अत्रआद्यास्वरूपोत्प्रेक्षाउक्तविषयानुक्तविषयाचेतिद्विविधा परेहेतुफलोत्प्रेक्षेसिद्धविषयाऽसिद्धविषयाचेतिप्रत्येकंद्विविधे एवं
षण्णामुत्प्रेक्षाणांधूमस्तोमेत्यादीनिक्रमेणोदाहरणानि रजनीमुखेसर्वत्रविसृत्वरस्यतमसोनैल्यदृष्टिप्रतिरोधकत्वादिधर्मसंबंधेनग
म्यमानेननिमित्तेनसद्यःप्रियविघटितसर्वदेशस्थितकोकांगनाहृदुपगतप्रज्वलिष्यद्विरहानलधूमस्तोमतादात्म्यसंभावनास्वरूपोत्प्रे
क्षातमसोविषयस्योपादानादुक्तविषया तमोव्यापनस्यनभःप्रभृतिभूपर्यंतसकलवस्तुसांद्रमलिनीकरणेननिमित्तेनतमःकर्तृके
लेपनतादात्म्योत्प्रेक्षा नभःकर्तृकांजनवर्षणतादात्म्योत्प्रेक्षाचानुक्तविषयास्वरूपोत्प्रेक्षाउभयत्रापिविषयभूततमोव्यापनस्यअनु

स्वकारादिभिःस्वरूपोत्प्रेक्षेतिव्यवहृतायास्तुरीयाया अपिसत्वात् त्रिविधेत्ययुक्तमित्याशंक्याह अत्रेति आसांमध्येयाप्रथमावस्तूत्प्रेक्षासैवस्वरूपोत्प्रे
क्षाच्यतइत्यर्थः विसृत्वरस्येतिप्रसरणशीलस्येत्यर्थः तमसइति संभावनेत्यनेनान्वेति षष्ठ्यर्थोविषयता तमोविषयेत्यर्थः प्रतिरोधकत्वादीत्यादिपदात् प्र
सरणशीलत्वस्यसंग्रहः प्रियैःपतिभिर्विघटिताविमुक्ताः व्यापनस्येतिषष्ठ्यंतस्यपूर्ववदुत्प्रेक्षापदेनान्वयः एवमग्रेतनस्यतमसइत्यस्यापि अनुपादानादि राम
तिविषयिवाचकाभ्यांलिंपतिवर्षतिभ्यामन्येनानुपादानादित्यर्थः यथाश्रुतेताभ्यामेवसाध्यावसानलक्षणयोपादानादसंगतेः उक्तविषयमेवेति ॥ २०

सकृदुच्चारिताभ्यांलिंपतिवर्षतिभ्यांशक्त्यालेपनवर्षणयोःसाध्यवसानलक्षणयाचसाधारणधर्मपुरस्कारेणव्यापनस्यचोपस्थापनस्ययुगपद्वृत्तिद्वयविरोधेना
संभवादित्याशयः स्मृतेःनिरुक्तस्मृतेः उत्प्रेक्षणीयतयाउत्प्रेक्षाविषयतया अन्यत्रउत्प्रेक्षायां अन्वयासंभवादिति निराकांक्षत्वादितिभावः अतएव आख्याता
र्थस्यकर्तुःक्रियोपसर्जनत्वेनान्यत्रान्वयासंभवादेव क्वचिदतएवेत्युत्तरं अयमेवव्याख्यानग्रंथःप्रमादल्लिखितोदृश्यते न्यग्भूतेति गुणभूतइत्यर्थः स्वक्रिये

नन्वत्रतमसोव्यापनेननिमित्तेनलेपनकर्तृतादात्म्योत्प्रेक्षानभसोभूपर्यंतंगाढनीलिमव्याप्तत्वेननिमित्तेनांजनवर्षणकर्तृतादात्म्यो
त्प्रेक्षाचेतिउत्प्रेक्षाद्वयमुक्तविषयमेवास्तु मैवंलिंपतिवर्षतीत्याख्यातयोःकर्तृवाचकत्वेपिभावप्रधानमाख्यातमितिस्मृतेर्धात्वर्थ
क्रियायाएवप्राधान्येनतदुपसर्जनत्वेनान्वितस्यकर्तुरुत्प्रेक्षणीयतयाअन्यत्रान्वयासंभवात् अतएवाख्यातार्थस्यकर्तुःक्रियोप
सर्जनत्वेनान्यत्रान्वयासंभवादेवास्योपमायामुपमानतयान्वयोपिदंडिनानिराकृतः कर्तायद्युपमानेस्यान्न्यग्भूतोसौक्रियापदे स्व
क्रियासाधनव्यग्रोनालमन्यद्व्यपेक्षितुमिति केचित्तुतमोनभसोर्विषययोस्तत्कर्तृकलेपनवर्षणस्वरूपधर्मोत्प्रेक्षेत्याहुः तन्मतेस्वरू
पोत्प्रेक्षायांधर्म्युत्प्रेक्षाधर्मोत्प्रेक्षाचेत्येवंद्वैविध्यंद्रष्टव्यं चरणयोःस्वतःसिद्धरक्तिमनिवस्तुतोविक्षेपणंनहेतुरिति अहेतोस्तस्यहेतु
त्वेनसंभावनाहेतूत्प्रेक्षाविक्षेपणस्यविषयस्यसत्वात्सिद्धविषया चंद्रपद्मविरोधेस्वाभाविकेनायिकावदनकांतिप्रेक्षानहेतुरिति
तत्रतद्धेतुत्वसंभावनाहेतूत्प्रेक्षावस्तुतस्तदिच्छाया अभावादसिद्धविषया ऽऽति क्रियांप्रतिसाधनत्वेनान्वितइत्यर्थः व्यपेक्षितुं आकांक्षितुं
नालंनसमर्थः तथाचनिराकांक्षत्वादुपमानत्वेनान्वयोनसंभवतीतिभावः एतेनतमसिलेपनकर्तृत्वमुत्प्रेक्ष्यमित्यलंकारसर्वस्वकारमतमपास्तं त
स्यापिकर्तृविशेषणत्वात् विवक्षितविवेकेनलेपनस्यैवोत्प्रेक्ष्यत्वाच्च एवंचप्रधानभूतलेपनक्रियागोचराभावनैवनिगीर्णव्यापनविषयेतिसिद्धम् ॥

नचयुगपद्वृत्तिद्वयविरोधः शंक्यः तदनभ्युपगमात् केचिदिति मतद्वृतिचास्वरसोद्भावनं नहीजंतुतमोनभ सोः कर्तृत्वेन विषयत्वेन चवारद्वयमन्वय क्लेशः तथाधर्म्युत्प्रेक्षासाधर्मप्रयुक्ता धर्मोत्प्रेक्षातुतत्सहचरितधर्मसंबंधप्रयुक्तेतिलक्षणाननुगमः नचतन्निष्ठतत्समानाधिकरणान्यतरत्वेनध र्मनिवेशान्नाननुगमइतिवाच्यम् सर्वत्रसादृश्यनिमित्तायाएवोत्प्रेक्षायाः संभवेनान्यतरत्वादिनिवेशप्रयुक्तगौरवस्यानुपादेयत्वादिति हेतुत्वेनेति हेतुरूपतयेत्यर्थः हेतुत्वसंभावना हेतुरूपतासंभावना फलत्वेनफलरूपतया एवमग्रेपिबोध्यम् अथोदाहृतास्वूत्प्रेक्षासुबोधःप्रकारः प्रदर्श्यते। तत्रधूमस्तोममित्यादौ कोकांगनाविरहानलसंबंधिधूमस्तोमाभिन्नतमोविषयासंभावनेतिबोधः नामार्थयोरभेदान्वयात् एवंमुखंचंद्रमन्यइत्यादा

मध्यःस्वयमेवकुचौधरतिनतुकनकदामबंधत्वेनाध्यवसितायावलित्रयशालितायाबलादितिमध्यकर्तृककुचधृतेस्तत्फल त्वेनोत्प्रेक्षासिद्ध विषयाफलोत्प्रेक्षा जलजस्यजलावस्थितेरुद्वासततपस्त्वेनाध्यवसितायाःकामिनीचरणसायुज्यप्राप्तिर्न फलमितितस्यागगनकुसुमायमानायास्तपःफलत्वेनोत्प्रेक्षणात् असिद्धविषयाफलोत्प्रेक्षा अनेनैवक्रमेणोदाहरणांतराणि

वपि नूनंमुखंचंद्र इत्यादौतु चंद्रप्रकारकसंभावनाविषयोमुखमितिबोधःमुखविषयाचंद्रप्रकारिकाचसंभावनातादात्म्यसंसर्गिकैव तथानुभवात् चम त्कारप्रयोजकस्यसंसर्गांतरस्याभावाच्च नचैवंचंद्रत्वप्रकारिका तस्यचंद्रोपसर्जनत्वात् एवंध्रुवे वादिशब्दसमभिव्याहारेपिबोध्यम् लिंपतीवेत्यनुक्तविष योत्प्रेक्षोदाहरणेतुलिंपतिनासाध्यवसानलक्षणयालेपनव्यापनोभयसाधारणेनसांद्रमलिनीकारकत्वादिनारूपेणोपस्थापितेतमोव्यापनेलेपनसंभावना न्वयात्सांद्रमलिनीकारकंनमः कर्तृकांगकर्मकलेपनप्रकारकसंभावनाविषयइतिबोधः व्यंजनयोपस्थितेव्यापनेतादृशसंभावनान्वयइतिप्रदीपकृतः ए वंवर्षतीत्यादावपिबोध्यम् विशेषणात् ध्रुवमित्यादिहेतूत्प्रेक्षोदाहरणेहेतुः पंचम्यर्थः तत्रचाभेदेनप्रकृत्यर्थान्वयः हेतोश्चस्वप्रयोज्याश्रयत्वसंबंधेनरक्त राम २१

त्वविशिष्टेतस्यप्रकारतासंबंधेनसंभावनायांतस्याश्चविषयतयाचरणयोरन्वयः तथाचभूम्यधिकरणकविक्षेपणाभिन्नहेतुकरक्तप्रकारकसंभावनाविष यावंघ्रीइतिबोधः नचतादात्म्यसंबंधेनहेतुविधेयकत्वाभावान्नेयंहेतूत्प्रेक्षास्यात्किंतुतादात्म्येनतथाविधरक्तस्वरूपोत्प्रेक्षैवेतिवाच्यम् विवक्षितवि वेकेनविक्षेपणेहेतुत्वभेदस्योत्प्रेक्षणीयतयाविक्षेपणंप्रतिविशेष्यभूतस्यापिहेतोर्विधेयत्वोपगमात् मुखचंद्रइत्यादिरूपकइवानुयोगित्वमुखस्या भेदस्यविक्षेपणसंसर्गत्वाभ्युपगमेनचविक्षेपणेहेतुत्वभेदभानसंभवात् हेतुविशिष्टस्वरूपोत्प्रेक्षायामुखतः प्रतीतावपिविवक्षावशेनहेतूत्प्रेक्षात्वेनैव व्यपदेशः यथादध्नाजुहोतीत्यत्रमुखतोदधिविशिष्टहोमप्रतीतावपिविवक्षितविवेकेनहोमेदधिविधित्वव्यपदेशइतिबोध्यम् नचस्वप्रयोज्यत्वसंबंधेनस्वप्र योज्याश्रयत्वसंबंधेनवाहेतुरूपधर्मोत्प्रेक्षैवरक्तादौस्वीक्रियतांकृतमीदृशकल्पनाक्लेशेनेतिवाच्यम् धर्मोत्प्रेक्षांगीकारेदूषणस्यप्रागेवावेदितत्वात् अतए

बालेंदुवक्राण्यविकासभावाद्बभुःपलाशान्यतिलोहितानि सद्योवसंतेनसमागतानांनखक्षतानीववनस्थलीनाम्

वहर्षाल्लग्नामन्येललिततनुतेपादयोः पद्मलक्ष्मीरितिहेतूत्प्रेक्षामुदाहृतवतः प्रकाशकृतोपितत्रहर्षहेतुकलगनतादात्म्यसंभावनमेवस्वाभाविकेलग नेऽभिमतं अस्मदुक्तरीत्यातुलक्ष्मीरूपेविषयेयथोक्तहर्षहेतुकलगनतादात्म्यसंभावनमुचितंलग्नस्यधर्म्युपसर्जनत्वेनसंभावनायामन्वयायोगादिति धेयं ॥एवंत्वन्मुखाभेत्यसिद्धविषयहेतूत्प्रेक्षायामपिबोध्यम् विषयसिद्धत्वासिद्धत्वाभ्यांबोधेविशेषाभावात् मध्यःकिमित्यादिफलोत्प्रेक्षास्थले फलेचतुर्थ्यर्थः। तत्रचाभेदेनप्रकृत्यर्थान्वयःपूर्ववत् फलस्यचप्रयोजकत्वसंसर्गेणबद्धत्वेतद्द्वारकेणतेनैवबद्धेवान्वयस्तत्रचतादात्म्यसंसर्गकसंभावनाया मध्योविषयतया एवंचकुचधरणाभिन्नफलककनकदामकरणकबद्धत्वाश्रयसंभावनाविषयोमध्यइतिबोधः एवंप्रायोज्जमित्यादावपिफलंतुमुनोर्थइति पूर्ववदेवबोधःफलोत्प्रेक्षात्वंचोपदर्शितरीत्योपपादनीयमितिबहुवक्तव्येपिविस्तरभयादुपरम्यते बालेंदुवक्राणीति नविद्यतेविकासोयेषांतान्यविकासानितेषांभा

कु॰ नं॰ चं॰ टी॰ २२

बालेंदुवक्रितीयाचंद्रवत्वक्राणितथातिशयेनलोहितानिआरक्तानिपलाशानिपलाशकुसुमानिवसंतेननायकेनसमागमंप्राप्तानांवनस्थलीनामंगनानांस्
द्यस्तत्कालसंभूतानिनखक्षतानीववभुःशुशुभिरइत्यन्वयः पूर्वेति धूमस्तोममित्यत्रेत्यर्थः ननुलोकेसंभावनायामिवशब्दोनदृष्टइत्यतआह अस्तिचे

अत्रपलाशकुसुमानांवक्रत्वलोहितत्वेनसंबंधेननिमित्तेनसद्यःकृतनखक्षततनादात्म्यसंभावनाउक्तविषयास्वरूपोत्प्रेक्षा पूर्वोदा
हरणेनिमित्तभूतधर्मसंबंधोगम्यः इहतूक्तइतिभेदः नन्विवशब्दस्यसादृश्यपरत्वेनप्रसिद्धतरत्वादुपमैवास्तुलिंपतीवेत्युदाहरणे
लेपनकर्तृरुपमानत्वाईस्यक्रियोपसर्जनत्ववदिहनखक्षतानामन्योपसर्जनत्वस्योपमाबाधकस्याभावात् उच्यते उपमायायत्र क्व
चित्स्थितैरपिनखक्षतैःसहवक्तुंशक्यतयावसंतनायकसमागतवनस्थलीसंबंधित्वस्यविशेषणस्यानपेक्षिततादिहतदुपात्तंपला
शकुसुमानांनखक्षततादात्म्यसंभावनायामिवशब्दमवस्थापयतितथात्वएवतद्विशेषणसाफल्यात् अस्तिचसंभावनायामिवशब्दः दूरे
तिष्ठन्देवदत्तइवाभातीति पिनष्टीवतरंगाग्रैः समुद्रः फेनचंदनं तदादायकरैरिंदुर्लिंपतीवदिगंगनाः अत्रतरंगाग्रैःफेनचंदनस्यप्रेरणंपेष
णतयोत्प्रेक्ष्यते समुद्रादुत्थितस्यचंद्रस्यप्रथमंसमुद्रपूरेप्रसृतानांकराणांदिक्षुव्यापनंचसमुद्रोपांतफेनचंदनकृतलेपनत्वेनोत्प्रेक्ष्यते उभयत्र
क्रमेणसमुद्रप्रांतगतफेनचंदनपूंजीभवनंदिशांधवलीकरणंचनिमित्तमितिफेनचंदनप्रेरणकिरणव्यापनयोर्विषययोरनुपादानादनुक्त
विषयेयंस्वरूपोत्प्रेक्षेति केषांचिदुपात्तयोःसमुद्रचंद्रयोरेवतत्कर्तृकपेषणलेपनरूपधर्मोत्प्रेक्षेतिमतं तेषांमतेपूर्वोदाहरणेधर्मिणिधर्म्यंतरतादा

ति पिनष्टीवेति समुद्रस्तरंगाणामग्रभागैःफेनरूपंचंदनंपिनष्टीवइंदुस्तत्फेनचंदनमादायकरैःकिरणैर्दिकूरूपाअंगनाःलिंपतीव अनुलिंपतीवेत्यर्थः समुद्रो
पांतेति समुद्रस्योपांतेतटेयत्फेनचंदनंतत्कृतंयत्तासांदिशांलेपनंतत्त्वेनेत्यर्थः उभयत्र उभयोरुत्प्रेक्षयोः येषां अलंकारसर्वस्वकारादीनां ॥ ७ ॥ राम २२

रात्राविति सप्रक्रांतः प्रभुर्भूपतिर्भूमौरात्रौरवेरभावाद्धेतोरिवदिवाचेंदोरभावाद्धेतोरिवसततंनिरंतरमुदितेप्रतापयशसीसृष्टवान्निर्मितवानित्यर्थः रक्ताविव्यु
दाहरणेभावरूपोहेतुरिहत्वभावरूपइतिभेदः विवस्वतेति विवस्वतासूर्येणस्वस्यगोसहस्रेणकिरणसहस्रेणसमंमिश्राःमिश्रिताः जनानांनेत्रापरनामधेयागा
वोपिअनायिषतेवनीताइव यथागोपालेनपरकीयाभिर्गोभिर्मिश्राःस्वीयागावोनीयंतेतथागोपत्वाच्यत्वसाजात्येनमिश्रिताविवस्वतापिनीताइवेत्यर्थः खलुसं
भावनायांतेननयनेनहेतुनाइदमांध्यंनत्वंधकारैरित्यन्वयः गोःस्वर्गेचबलीवर्देरश्मौचकुलिशेपुमान् स्त्रीसौरभेयीदृक्बाणदिग्वाग्भूष्वप्सुभूम्निचेतिमेदि

इहतुधर्मिणिधर्मसंसर्गोत्प्रेक्षेतिभेदोवगंतव्यः रात्रौरवेर्दिवाचेंदोरभावादिवसःप्रभुः भूमौप्रतापयशसीसृष्टवान्सततोदिते रात्रौरवेर्दिवाचं
द्रस्याभावःसन्नपिप्रतापयशसोःसर्गेनहेतुरिति तस्यतद्धेतुत्वसंभावनासिद्धविषयाहेतूत्प्रेक्षा विवस्वतानायिषतेवमिश्राःस्वगोसहस्रे
णसमंजनानां गावोपिनेत्रापरनामधेयास्तेनेदमांध्यंखलुनान्धकारैः अत्रविवस्वताक्रांतेस्वकिरणैःसहजनलोचनानांनयनमसदेवरात्रा
वांध्यप्रतिहेतुत्वेनोत्प्रेक्ष्यतइति असिद्धविषयाहेतूत्प्रेक्षा पूरंविधुर्वर्द्धयितुंपयोधेःशंकेयमेणांकमणिंकियंति पयांसिदोग्धिप्रियविप्रयोगस
शोककोकीनयनेकियंति अत्रचंद्रेणकृतंसमुद्रस्यबृंहणंसदेवतदातेनकृतस्यचंद्रकांतद्रावणस्यकोकांगनाबाष्पस्रावणस्यचफलत्वेनोत्प्रे

नी अत्रचानायिषतेवेति विषयोत्प्रेक्षणपूर्वकंतस्यहेतुत्वेनोत्प्रेक्षणमितिपूर्वस्माद्भेदः एवंपूर्वत्रइच्छयेतिगुणरूपोहेतुरिहतुक्रियारूपइत्यपिद्रष्टव्यं अत्रचोत्प्रे
क्षाद्वयसत्त्वेपिहेतूत्प्रेक्षायाःप्राधान्यात्तत्त्वेनैवव्यपदेशोनतुस्वरूपोत्प्रेक्षात्वेन तस्याअंगत्वात् एवमन्यत्रापिबोध्यम् पूरमिति अयंविधुश्चंद्रःपयोधेःपूरं
वर्द्धयितुमेणांकमणिंचंद्रकांतंकियंतिलोकोक्त्या अपरिमितानिपयांसिदोग्धीतिशंके तथाप्रियैःपतिभिर्विप्रयोगेवियोगेसतिसशोकानांकोकांगनानांनयनेकर्म
भूतेकियंतिपयांसिदोग्धीतिशंकइत्यन्वयः दुहेर्द्विकर्मकत्वादेणांकमणिमितिद्वितीया एवंनयनेइत्यत्रापि मध्यःक्विमित्यत्रेकस्यबहुत्वस्यफलत्वेनकुच

धृतेरुत्प्रेक्षणमिहतुद्रावणस्रावणयोर्द्वयोः फलत्वेनपूरवर्द्धनस्यतदितिभेदः बृंहणंवर्द्धनं तदावर्द्धनकाले तेनचंद्रेण रथस्थितानामिति रविः रथेस्थिता नानियुक्तानां पुरातनानांवाहनानां अश्वानांपरिवर्तनायेवतुरगोत्तमानां उत्पत्तिभूमावुत्तरस्यां दिशिप्रतस्थइत्यन्वयः प्रायोब्जमित्यत्रैक्यस्यगुणस्यफ लत्वेनोत्प्रेक्षणमिहतुपरिवर्त्तनक्रियायाइतिभेदः नन्वलंकारसर्वस्वकारादिभिरन्येषामपिजात्यादिभेदानामुक्तत्वात्कुतस्तेनप्रदर्शिताइत्याशंक्याह॥ एतास्वेवेति उक्तभेदास्वेवेत्यर्थः उत्प्रेक्षाइत्यनंतरंचमत्कारविशेषप्रयोजिकाइतिशेषः तथाचजात्यादिभेदानांचमत्कारविशेषानाधायकत्वादप्रदर्शने

रथस्थितानांपरिवर्तनायपुरातनानामिववाहनानां उत्पत्तिभूमौतुरगोत्तमानांदिशिप्रतस्थेरविरुत्तरस्यां अत्रोत्तरायणस्याश्वपरिवर्त्तन मसदेवफलत्वेनोत्प्रेक्ष्यतइतिअसिद्धविषयाफलोत्प्रेक्षा एतास्वेवोत्प्रेक्षाः मन्येशंकेध्रुवंप्रायोनूनमित्येवमादिभिः उत्प्रेक्षाव्यज्यतेशब्दै रिवशब्दोपितादृशइत्युत्प्रेक्षाव्यंजकत्वेनपरिगणितानांशब्दानांप्रयोगेवाच्याः तेषामप्रयोगेगम्योत्प्रेक्षायथा त्वत्कीर्तिर्भ्रमणश्रांताविवे शस्वर्गनिम्नगां रूपकातिशयोक्तिः स्यान्निगीर्याध्यवसानतः पश्यनीलोत्पलद्वंद्वान्निःसरंतिशिताःशराः विषयस्यस्वशब्देनोल्लेखनंविना विषयिवाचकेनैवशब्देनग्रहणंविषयनिगरणंतत्पूर्वकंविषयस्यविषयीरूपतयाध्यवसानमाहार्यनिश्चयस्तस्मिन्सतिरूपकातिशयोक्तिः

मितिभावः इत्युत्प्रेक्षेति इत्यनेनोत्प्रेक्षाबोधकत्वेनेत्यर्थः॥ त्वत्कीर्त्तिरिति अत्रानुपात्तस्वर्गगमनविषयास्वर्गगाप्रवेशतादात्म्योत्प्रेक्षाविशेषणीभूतभ्रमण श्रांतत्वरूपहेतूत्प्रेक्षावाप्रतीयतइतिबोध्यम् इतिश्रीमत्तत्सदुपाख्यवैद्यनाथकृतायामलंकारचंद्रिकायांश्रीमत्कुवलयानंदीयटीकायामुत्प्रेक्षाप्रकरणम् अतिशयोक्तिंलक्षयति रूपकातिशयोक्तिरिति ग्रहणं उपस्थापनं विषयिरूपतयेति विषयिणोरूपमस्य तस्यभावस्तत्तातयेत्यर्थः रूपंचाभेदता द्रूप्यान्यतरत् तस्मिन्सतीति सप्तमीसमर्थोत्तसिरित्यभिप्रायेण एवंचानुपात्तविषयधर्मिकाहार्यनिश्चयविषयीभूतेविषय्यभेदताद्रूप्यान्यतरत् रूपकाति

अत्ररूपकवारणायानुपात्तेति अयमेवचरूपकादस्यांविशेषोऽतिशयइत्युच्यते भ्रांतिवारणायाहार्येति उत्प्रेक्षावारणायनिश्चयेति नीलोत्पलेति अत्र नीलोत्पलपदात्साध्यवसानलक्षणयाशक्यलक्ष्योभयानुगतकांतिविशेषादिपुरस्कारेणोपस्थितेकामिनीनयनेशक्त्युपस्थितस्यनीलोत्पलत्वविशि ष्टस्याभेदसंसर्गेणान्वयः शक्त्युपस्थितयोः कृतीष्टसाधनतयोरिवशक्तिलक्षणाभ्यामुपस्थितयोरप्येकपदार्थयोस्तात्पर्यवशेनान्वयोगीकारेबाधकाभा वात् एवंचनीलोत्पलाभिन्नकांतिविशेषवद्वंद्वादितिबोधादियमभेदातिशयोक्तिरित्युच्यते नचैवंसतिरूपकाद्वैलक्षण्यमितिवाच्यम् रूपकेविषयिभे दव्याप्यस्यविषयतावच्छेदकस्यभानेनवैलक्षण्यस्यस्फुटत्वात् यदात्वभेदभानेनतात्पर्यंकिंतुभेदभानेतदाकांतिविशेषादिरूपताद्रूप्यस्यैवबोधात्ताद्रूप्य

यथानीलोत्पलशरशब्दाभ्यांलोचनयोः कटाक्षाणांचग्रहणपूर्वकंतद्रूपताध्यवसानं यथावा वापीकापिस्फुरतिगगनेतत्परंसूक्ष्मपद्या सोपानालीमधिगतवतीकांचनीमैंद्रनीली अग्रेशैलौसुकृतिसुगमौचंदनच्छन्नदेशौतत्रत्यानांसुलभममृतंसन्निधानात्सुधांशोः अत्रवाप्या दिशब्दैर्नाभिप्रभृतयोनिर्गीर्णाः अत्रातिशयोक्तौरूपकविशेषणंरूपकेदर्शितानांविधानामिहापिसंभवोस्तीत्यतिदेशेनप्रदर्शनार्थं तेनात्रा प्यभेदातिशयोक्तिस्ताद्रूप्यातिशयोक्तिरितिद्वैविध्यंद्रष्टव्यं तत्राप्याधिक्यन्यूनताविभागश्चेति सर्वमनुसंधेयम् ऽतिशयोक्तिर्वक्ष्यतेइतिबोध्यं वापीति मध्यभागमारभ्यमुखपर्यंतंनायिकांगवर्णनमिदं गगनेसूक्ष्मतयातद्दुर्लक्ष्येमध्येकापिअनिर्वचनीयशोभावापीतद्गंभीरानाभिःस्फुरतिशोभतेतत् परंतदूर्ध्वभागेऐंद्रनीलीइन्द्रनीलघटितासूक्ष्मपद्यासरणिस्तद्गत् श्यामारोमावलीस्फुरतीत्यनुषज्यते किंभूताकांचननिर्मितांसोपानपंक्तिंतत्सदृशींत्रिव लीमधिगतवती प्राप्तवती तथाअग्रेतदूर्ध्वदेशेशैलौतद्गत्तुंगविशालौकुचौस्फुरतइतिविभक्तिविपरिणामेनसंबध्यते कीदृशौसुकृतिनांपुण्यकृतांसुगमौसुलभ गमनौसुलभौच पुनःकीदृशौचंदनतरुभिश्चंदनपंकेनवाच्छन्नोव्याप्तोदेशोययोस्तथाभूतौ तत्रत्यानांतदाश्लिष्टानांचसुधांशोस्तद्गदाल्हादकस्यमुखस्यस

न्निधानादमृतं तद्वदास्वाद्यमधरमाधुर्यं स्फलमिस्यन्वयः विधानांभेदानां इतीत्यस्य प्रदर्शनार्थमित्यनेनान्वयः अतिदेशेनेति सादृश्येनेत्यर्थः मुख्यरूपकाभेदस्यातिशयोक्त्यावभावाद्रूपकपदं रूपकसदृशपरं षण्मासमग्निहोत्रंजुह्वतीत्यत्राग्निहोत्रपदवद्धर्मातिदेशकमित्याशयः आधिक्यन्यूनत्वस्यत्रानुभयोक्तेरुक्तोदाहरणेषुप्रसिद्धतरत्वादनुपादानंबोध्यम् यत्तत्रकैश्चिदुक्तं विषयिवाचकपदस्यविषयेसाध्यवसानलक्षणायाः शक्यतावच्छेदकमात्रप्रकारकत्वस्य विशेष्यकबोधत्वंकार्यतावच्छेदकं एवंचनिगरणे सर्वत्रविषयतावच्छेदकधर्मरूपेणैवविषयस्यभानंनविषय्यभिन्नत्वेनेतिस्थितेःभेदातिशयोक्तिस्ताद्रूप्यातिशयोक्तिरितिद्वैविध्यमयुक्तमिति तत्सौढविलसितंशक्यतावच्छेदकस्यलक्ष्येपूर्वमप्रतीतत्वेनतद्विशिष्टतयालक्षणायाअसंभवात् यद्धर्मविशिष्टेशक्यसंबंधग्रहस्तद्धर्मप्रकारकत्वस्योपस्थितेः समानप्रकारकशब्दबोधेहेतुत्वात् लक्षणापरिहारायायाअनुपपत्तेस्तदवस्थत्वाच्च एवमपितात्पर्यवशात्तादृशबोधांगीकारेतद्वशादेवशक्याभेदप्रकारकबोधेपिवाधकाभावान्मात्रपदेनविषयतावच्छेदकस्यैवव्यावर्त्तनादितिदिक् सुधावद्धेति विद्धशाल

यथावा स्फुधाबद्धग्रासैरुपवनचकोरैरनुसृतांकिरन्ज्योत्स्नामच्छांलवलिफलपाकप्रणयिनीम्

भंजिकाख्यायांनाटिकायांस्फटिकप्राकारशिखरगतांमृगांकावलीमालोकयतोराज्ञोविदूषकंप्रत्युक्तिरियं प्राकाराग्रसमीपेनयनेप्रहिणुप्रेरय मनाक्ईषत्तर्कय अनाकाशे अनंतरिक्षेकोयंशीतकिरणश्चंद्रइति मुखेचंद्रगताल्हादकारित्वरूपताद्रूप्याध्यवसानं कीदृशः गलितस्च्युतोहरिणोयस्मात्तथाभूतः तेननिःकलंकतयोत्कर्षाभिव्यक्तिः पुनःकीदृक् सुधायांबद्धःग्रासस्तदभिलाषोयैस्तैरुपवनसंबंधिभिश्चकोरैरनुसृतांलवल्याः फलपाकस्यप्रणयिनींसदृशींअच्छांस्वच्छांज्योत्स्नांतत्वेनाध्यवसितांकांतिंप्रभांकिरन्प्रसारयन्नित्यर्थः लवलीलताविशेषोहरफारेवडीति भाषाप्रसिद्धः प्राकारोवरणः शालइत्यमरः समाबद्धग्रासैरिति क्वचित्पाठस्तत्राप्युक्तएवार्थः नवलवलीतिपाठेनवश्चासौलवलिपाकश्चेत्यन्वयोबोध्यः ॥ ७ ॥ ॥ ७ ॥ ७ ॥ ७ ॥



नन्विहाभेदविवक्षैवकिंनस्यादतआह अत्रेति कोयमित्यनेनानिर्ज्ञातत्वप्रकाशनात्प्रसिद्धस्यनिर्ज्ञातत्वात् तद्वैलक्षण्यावगतिरितिभावः गर्भितः गलितेत्यादिविशेषणव्यंग्यत्वेनाभिप्रेतः अन्यत्रापीति अनुच्छिष्टोदेवैरपरिदलितोराहुदशनैः कलंकेनाश्लिष्टोनखलुपरिभूतोदिनकृता कुहूभिर्नालुप्तोनचयुवतिवक्त्रेणविजितः कलानाथः कोयंकनकलतिकायामुदयतइत्यादावित्यर्थः अथवान्यत्रापिन्यूनतायामपीत्यर्थः कोयंभूमिगतश्चंद्रइत्यादावदिव्यत्वरूपन्यूनताप्रकाशनमूहनीयमिति भावः ननूक्तोदाहरणेष्वयमिति विषयस्योपादानात्कथमतिशयोक्तिरितिचेत् अत्राहुः इदंत्वस्यविषयिविशेषणत्वेनविवक्षायामतिशयोक्तिरेव यदातुविषयविशेषणत्वविवक्षातदारूपकमितिव्यवस्था अतएवप्रकाशकृतादृशमेरूपकातिशयोक्त्यादिसंदेहसंकरेनम

उपप्राकाराग्रंप्रहिणुनयनेतर्कयमनागनाकाशेकोयंगलितहरिणः शीतकिरणइत्यत्रकोयमित्युक्त्याप्रसिद्धचंद्राद्भेदस्ततउत्कर्षश्चगर्भितः एवमन्यत्राप्यूहनीयं यद्यपन्हुतिगर्भत्वंसैवसापन्हवामता त्वत्सूक्तिषुसुधाराजन्भ्रांताःपश्यंतितांविधौ अत्रत्वत्सूक्तिमाधुर्यमेवामृतमित्यतिशयोक्तिः चंद्रमंडलस्थममृतंनभवतीत्यपन्हुतिगर्भा यथावा मुक्ताविद्रुममंतरामधुरसःपुष्पंपरंधूर्वहंप्रालेयद्युतिमंडलेखलुतयोरेकास्तिकानार्णवे। तच्चोदंचतिशंखमूर्ध्निनपुनःपूर्वाचलाभ्यंतरेतानीमानिविकल्पयंतितइमेयेषांनसादृक्पथे ॥

नानंददायीदोर्बिंबमेतत्प्रसीदतीत्युदाहृतमिति एनांविभजते यद्यपन्हुतीति अपन्हुतिगर्भत्वंपर्यस्तापन्हुतिगर्भत्वं सैवरूपकातिशयोक्तिरेव तथाचसापन्हवत्वनिरपन्हत्वभेदेनद्विविधातिशयोक्तिरितिभावः मुक्तेति तान्यनुभवैकवद्यानिइमानिवस्तूनितेइमेजनाः विकल्पयंति सदसद्वेति विकल्पविषयाणिकुर्वंति येषांजनानांसाप्रक्रांतासुंदरीदृक्पथेलोचनमार्गेनास्तीत्यन्वयः तादृशसुंदरीदर्शनशालिनस्तुविकल्पयंतीतिभावः तानिकानिवस्तूनितत्राह मुक्तामौक्तिकंविद्रुमंप्रवालंचांतराअनयोर्मध्येमधुरसः अंतरांतरेणयुक्तेइतिद्वितीया पुष्पंपरंकेवलंधूर्वहंभारवाहकं नतुमधुरसयुक्तं तयोर्मुक्ताविद्रुमयोः खलुनिश्चितं

एकासिकाएकस्मिन्नासिका अवस्थितिः एकाधिकरण्यमित्यर्थः नत्वर्णवे समुद्रे तच्चचंद्रमंडलंच शंखस्य मूर्ध्नि मस्तके उदंचति उदयं प्राप्नोति नपुनः पूर्वाचलस्यो दयगिरेरभ्यंतरे उदंचति अत्र मुक्ताविद्रुममधुरसप्रालेयद्युतिमंडलशंखशब्दैः क्रमेण दंताधरतन्माधुर्यमुखकंठानि गीर्णाः पूर्वोदाहरणे भ्रांतत्वोक्त्या स्वपह्नवः इह तु परं धूर्वहमित्युक्त्या गूढ इति भेदः प्रालेयमिहिकाचेत्यमरः गतास्विति पुरे भवाः पौर्यस्तासु विलासिनीषु तिमीनां मत्स्यानां संघट्टनेन ससंभ्रमं संभ्रमंतीं रंप्रति गतासु सतीषु यत्र नगर्यां शिप्रानदी उल्लसतीनां फेनततीनां छलेन मुक्तः कृतः अट्टहासः उद्धतहास्यं यया तथाभूतेव विभातीत्यन्वयः इंदुमंडलादा

अत्राधररसएवमधुरसइत्याद्यतिशयोक्तिः पुष्पसोमधुरसेन भवतीत्यपह्नुतिगर्भा अलंकारसर्वस्वकृतास्वरूपोत्प्रेक्षायां सापह्नवत्वमुदाहृतं गतासु तीरं तिमिघट्टनेन ससंभ्रमं पौरविलासिनीषु यत्रोल्लसत्फेनततिछलेन मुक्ताट्टहासेव विभाति शिप्रा ततस्त्विय नत्र भेदः एतत्तु शुद्धापह्नुतिगर्भं यत्र फेनततित्वमपह्नुतं तत्रैवाट्टहासत्वोत्प्रेक्षणादिह तु पर्यस्तापह्नुतिगर्भत्वमिंदुमंडलादावपह्नुतस्यामृतादेः सूक्त्यादिषु निवेशनात् इदं च पर्यस्तापह्नुतिगर्भत्वमुत्प्रेक्षायामपि संभवति तत्र स्वरूपोत्प्रेक्षायां यथा जानेतिरागा दिदमेव बिंबं बिंबस्य च व्यक्तमितोऽधरत्वं द्वयोर्विशेषावगमाक्षमाणां नाम्नि भ्रमो भूदनयोर्जनानां अत्र प्रसिद्धफले बिंबतामपह्नुत्य तिरागेण निमित्तेनेदमयं त्वधरे तदुत्प्रेक्षा पर्यस्तापह्नुतिगर्भा हेतूत्प्रेक्षायां तद्गर्भत्वं प्राक्लिखिते हेतूत्प्रेक्षोदाहरण एव द्रक्ष्यते ॥२॥

वित्यादि पदात्पुष्परसादिपरिग्रहः सूक्त्यादिष्विति सूक्तिमाधुर्यादिष्वित्यर्थः आदिना अधरमाधुर्यपरिग्रहः निवेशनात् अभेदाध्यवसानात् जानेइति दमयंतीं वर्णयतो नलस्योक्तिः अतिशयितात् रागाल्लौहित्यादिदमधरस्वरूपमेव बिंबमिति जानेन तु बिंबफलमित्येव कारार्थः बिंबस्य बिंबफलस्यातोऽस्मादोष्ठाद् धरत्वं निकृष्टत्वं व्यक्तं स्फुटं कथं तर्हि विपरीतालोकप्रसिद्धिस्तत्राह द्वयोरनयोर्विशेषस्य तारतम्यस्यावगमे बोधेऽक्षमाणामसमर्थानां जनानां नाम्नि भ्रमो



अन्यत्रेति। स्वरूपे कर्त्तृकेनेत्रापरपर्यायगोनयने इत्यर्थः निवेशितं उत्प्रेक्षितं रवीति रविणा संतप्तो गजः तस्य रवेर्गृह्यान् पद्मान्बंधूनिति यावत् ध्रुवं शायो बाधितुं सरः प्रविशति न तु स्नातुं स्नानार्थं हि यस्माद्गजस्य स्नानं निष्फलं निःप्रयोजनमित्यन्वयः प्रसक्तानुप्रसक्त्येति अतिशयोक्तेः सापह्नवत्वकथनप्रसंगादलंकारसर्वस्वकृदुक्तं स्वरूपोत्प्रेक्षाया शुद्धापह्नुतिगर्भत्वं दर्शितं तदनुप्रसक्त्या च त्रिविधास्वप्युत्प्रेक्षासु पर्यस्तापह्नुतिगर्भत्वमित्यर्थः भेदकेति तस्यैव तज्जातीयस्यैव अन्यत्ववर्णनं तज्जातीयभिन्नत्वेन वर्णनं तच्चाहार्यबोध्यम् एवमग्रेपि तेन भ्रांतौ नातिव्याप्तिः इदंचलोकोत्तरत्वप्रतिपत्त्यर्थं अन्यदेवेति अस्य महीपतेर्गांभीर्यं अन्यदेव प्रसिद्धगांभीर्यभिन्नमेवेत्यर्थः अन्यैयमिति रूपं सौंदर्यं वैदग्ध्यं चातुर्यं धोरणी परिपाटी एषा नलिनपत्राक्षीविधेः

तत्र चाधिकारेष्वाध्यहेतुत्वमपह्नुत्यान्यत्र तन्निवेशितं फलोत्प्रेक्षायां यथा रवितप्तो गजः पद्मान्तद्गृह्यान्बाधितुं ध्रुवं सरो विशति न तु स्नातुं गजस्नानं हि निष्फलम् अत्र गजस्य सरःप्रवेशप्रतिफले स्नाने फलत्वमपह्नुत्य पद्मबाधने तन्निवेशितं अलमनया प्रसक्तानुप्रसक्त्या प्रकृतमनुसरामः। भेदकातिशयोक्तिस्तु तस्यैवान्यत्ववर्णनं अन्यदेवास्य गांभीर्यमन्यद्धैर्यं महीपतेः अत्र लोकप्रसिद्धगांभीर्याद्यभेदेपि भेदो वर्णितः यथा वा अन्यैयं रूपसंपत्तिरन्या वैदग्ध्यधोरणी नैषा नलिनपत्राक्षी सृष्टिः साधारणी विधेः संबंधातिशयोक्तिः स्यादयोगे योगकल्पनं सौधाग्राणि पुरस्यास्य स्पृशंति विधुमंडलं

१ साधारणी सृष्टिः नैवेत्यन्वयः अत्रोत्तरार्द्धे नञ्भंग्याऽन्यत्ववर्णनं विशेषः संबंधेति अयोगे असंबंधे योगकल्पनं संबंधवर्णनं संबंधश्चाभेदभिन्नत्वे सत्यन्यत्वाद्यनिरूपितो ग्राह्यः तेन रूपकातिशयोक्त्यादिप्रभेदेषु नातिव्याप्तिः सौधेति सौधोऽस्त्री राजसदनमित्यमरः नन्वत्रैव स्पृशंतीवेंदुमंडलमितीवपदप्रयोगे उत्प्रेक्षाप्रतीतेस्तदप्रयोगे गम्योत्प्रेक्षात्वमुचितम् इवादिसत्त्वे यावा च्योत्प्रेक्षा सैवेवाद्यभावे गम्योत्प्रेक्षेति नियमात् अन्यथा त्वत्कीर्त्तिर्भ्रमणश्रांतेत्यादिपूर्वोदाहृते नपद्येपि गम्योत्प्रेक्षानस्याद्विशेषाभावादिति चेत् मैवम् ॥

उपदर्शितनियमस्यालंकारांतराविषयत्वाभ्युपगमात् अन्यथानूनंमुखंचंद्रइत्यादौनूनमित्यप्रयोगेगम्योत्प्रेक्षापत्तेः एवंचप्रकृतेसंबंधेसंबंधवर्णनं रूपाति
शयोक्त्यलंकारविषयेनगम्योत्प्रेक्षावसरः त्वत्कीर्तिरित्युदाहरणेतुभ्रमणश्रांतत्वरूपहेतुत्वेनगम्योत्प्रेक्षाभिप्रेतानतुस्वर्गगाप्रवेशांशइतिसर्वमवदातं अ
संदिग्धमुदाहरणांतरमाह यथावेति कतिपयेति वीररुद्रदेवाख्येनृपेवितरणशालिनिदानशालिनिसतिचक्रवाकी इतिमुदंसंतोषमुपयातिप्राप्नोति इति
किं कृतवासरस्यावसानंनाशोयेनसः कनकगिरिःसुमेरुः कतिपयैरल्पैर्दिवसैःस्वयंप्रयायादिति संभावनायांलिङ् योगेपीति योगेसत्यप्ययोगवर्ण

यथावा कतिपयदिवसैःस्वयंप्रयायात्कनकगिरिःकृतवासरावसानः इतिमुदमुपयातिचक्रवाकीवितरणशालिनिवीररुद्रदेवे अत्रचक्र
वाक्याःसूर्यास्तमयकारकमहामेरुक्षयसंभावनाप्रयुक्तसंतोषासंबंधेपितत्संबंधोवर्णितः। योगेप्ययोगः संबंधातिशयोक्तिरितीयते
त्वयिदातरिराजेंद्रस्वर्द्रुमान्नाद्रियामहे अत्रस्वर्द्रुमेष्वादरसंबंधेपितदसंबंधोवर्णितइति असंबंधातिशयोक्तिः यथावा अनयोरनवद्यां
गिस्तनयोर्जृंभमाणयोः अवकाशोनपर्याप्तस्तवबाहुलतांतरे अक्रमातिशयोक्तिःस्यात्सहत्वेहेतुकार्ययोः आलिंगतिसमंदेवज्यांशरा
श्चपराश्चते अत्रमौर्व्यांयदाशरसंधानंतदानीमेवशत्रवःक्षितौपततीतिहेतुकार्ययोःसहत्वंवर्णितम् ९ नमित्यर्थः स्वर्गस्याद्रुमाःकल्प
वृक्षादयः स्वर्द्रुमेष्विति विषयसप्तमीस्वर्द्रुमविषये आदरस्तस्यसंबंधेपि अर्थाद्दर्थिषु यद्वा अर्थिषुस्वर्द्रुमविषयादरसंबंधाभावप्रतीतौतत्समानवित्ति
वेद्यतयास्वर्द्रुमेष्वप्यादरविषयत्वाभावावगमाद्यथाश्रुतमेवसाधु अनयोरिति अनवद्यानिनिर्दुष्टान्यंगानियस्यास्तथाभूतेइतिसंबोधनं जृंभमाणयोर्वर्द्ध
मानयोरनयोस्तनयोस्तवबाहुलतयोरंतरेमध्येपर्याप्तः अवकाशोनास्तीत्यन्वयः अत्रबाहुलतयोरंतरेस्तनपर्याप्तावकाशसंबंधेपितदसंबंधउक्तः
अक्रमेति क्रमःपौर्वापर्यंतदभावोऽक्रमस्तद्रूपस्यातिशयस्योक्तिरित्यर्थः सहत्वेसमकालत्वे आलिंगतिसमंयुगपज्ज्यांमौर्वींपृथ्वींचपराःशत्रवः ॥ राम
२६

मुंचतीति हंमीरसंज्ञकस्यवीरस्यखड्गेकोशंपिधानंमुंचतिसति अरीणांवर्गःसमूहोपिकोशंभांडारंमुंचति तथाखड्गेप्रकंपमुल्लासनंभजतिसति सःप्र
कर्षेकंपं भजति एवंखड्गेस्मांसांतिंत्यजतिसतिसोपिक्ष्मांपृथ्वींत्यजतीत्यर्थः कोशास्त्रीकुड्मलेखड्गपिधानेऽर्थौघदिव्ययोरित्यमरः अत्रशत्रुप्रत्यप
भंग्यायोगपद्यवर्णनंविशेषः धनगृहेति धनसंबंधिगृहेत्यर्थः चपलेति हेतोःप्रसक्तिर्ज्ञानंतज्जन्येकार्यसतीत्यर्थः यास्यामीति उदितेउक्तेप्रियेणेति
शेषः तन्व्याऊर्मिकाअंगुलीयकंवलयः कंकणमभवदित्यर्थः ऊर्मिकात्वंगुलीयेस्याद्वस्त्रभंगतरंगयोरितिविश्वः कार्यमुखेनेति अंगुलीयकस्यकं
कणपदप्राप्तिरूपकार्यवर्णनद्वारेणेत्यर्थः आदातुमिति सहजसौकुमार्यवत्याः विरहदशायांतदतिशयवर्णनमिदं हंतेतिखेदे आदातुंगृहीतुंसक्रदे

यथावा मुंचतिमुंचतिकोशंभजतिचभजतिप्रकंपमरिवर्गः हंमीरवीरखड्गेत्यजतित्यजतिक्ष्मामाशु अत्रखड्गस्यकोशत्यागादिकालएवरिपूणां ॥
धनगृहत्यागादिर्वर्णितः चपलातिशयोक्तिस्तुकार्येहेतुप्रसक्तिजे यास्यामीत्युदितेतन्व्यावलयोभवदूर्मिका अत्रनायकप्रवासप्रस
[illegible]मात्रेणयोषितो[illegible]कार्श्यकार्यमुखेनदर्शितं यथावा आदातुंसकृदीक्षितेपिकुसुमेहस्ताग्रमालोहितंलाक्षारंजनवार्तयापिसह
[illegible]रक्तंतलंपादयो[illegible] अंगानामनुलेपनस्मरणमप्यत्यंतखेदावहंहताधीरदृशःकिमन्यदलकामोदोपिभारायते यामिनयामीतिधवेव
[illegible]तेपुरस्तात्क्षणेनतन्वंग्याः ९ कदाचमपिकुसुमेईक्षितेसति अधीरदृशः हस्ताग्रमालोहितंभवतीतिशेषः अपिनाकिमुगृहीतेइतिगम्यते लाक्षायावत
रंजनंतद्वार्त्तयापिसहसाअकस्मात्पादयोस्तलंरक्तंभवति किमुरंजनेनेति पूर्ववत् एवमंगानांचंदनादिनायदनुलेपनंतत्स्मरणमपिअत्यंतखेदकरंकिमु
तानुलेपने किमन्यत्तवाच्यमितिशेषः अलकानामगरुधूपाद्यामोदोपिभारायतेभारइवाचरतीत्यर्थः कर्तरिक्यङ् अत्रादानादिरूपहेतुप्रसक्तिमात्रेण
हस्ताग्रलोहित्यादिरूपकार्योत्पत्तेःसाक्षादेववर्णनंनतुकार्यमुखेनेतिपूर्वस्माद्भेदः हेतुकार्ययोरिवहेतुप्रसक्तिकार्ययोरपिसमकालत्वसंभवतीतिसूचयितुं

कु॰नं॰ धवेदर्पिते यामिन यामीतिवदतिसति वत्सणेन तत्कालमेव तन्वंग्याः पुरोवलयानि अग्रिमकंकणानि पुरः प्रथमं गलितानि अपराण्यपि तथैव तत्कालमेव
चं॰टी॰ दलितानि भग्नानीत्यन्वयः पुरोग्रे प्रथमे चस्यादितिविश्वः अत्र वदति गलितानीति शतृप्रत्ययेन समकालतावगतिः अत्यंतेति अत्र हेतुकार्ययोरित्यनुव
२७ र्तते तत्सौर्वापर्यैति क्वचित्पाठः साधुरेव व्यतिक्रमो ऽत्र वैपरीत्यं अग्रेप्रथमं अनुनीतासमाहिता कवींद्राणामिति कविश्रेष्ठानामंगणसंबंधिन्योभूमयः प्र
थमतरमेव प्रथममेव चलतां चपलानां भृंगाणां भ्रमराणामासंगेनाकुलानां करिणां मदजलस्यामोदेन परिमलेन मधुरा रमणीया आसन् अभवन् प
श्चादनंतरं तेषां कवीनामुपरि रुद्रसंज्ञकस्य नृपतेः अमीदृश्यमानाः कटाक्षाः पतिताः कीदृशाः क्षीरसमुद्रं कंयस्य तथाभूतस्य क्षीरार्णवस्य प्रसरंतीनामु

गलितानि पुरोवलयान्यपराणि तथैव दलितानि अत्यन्तातिशयोक्तिस्तत्पौर्वापर्यव्यतिक्रमे अग्रे मानो गतः पश्चादनुनीता प्रियेण सा
यथा वा कवींद्राणामासन्प्रथमतरमेवांगणभुवश्चलद्भृंगासंगाकुलकरिमदामोदमधुराः अमी पश्चात्तेषामुपरि पतिता रुद्रनृ
पतेः कटाक्षाः क्षीरोदप्रसरदुरुवीचीसहचराः एतास्तिस्रोप्यतिशयोक्तयः कार्यशैघ्र्यप्रत्यायनार्थाः ॥ ((उरुवीचीनां बृहत्तरंगाणां सहचरा

स्तत्सदृशा इत्यर्थः उदकस्योदः संज्ञायामित्युदादेशः अत्र यथोक्तकटाक्षरूपकार्यमुखेन नृपतिप्रसादरूपहेतुकथनं पूर्वस्माद्विशेषः एताः अव्यवहितो
क्ताः अथोक्तेषु प्रभेदेषु अनुगतप्रवृत्तिनिमित्ताभावात्कथमतिशयोक्तिपदप्रयोग इतिचेत् अत्राहुः तावत्प्रभेदान्यतमत्वमेव सर्वानुगतमतिशयोक्ति
पदप्रवृत्तिनिमित्तं तदेव च सामान्यलक्षणमिति नव्यास्तु निगीर्याध्यवसानमेवातिशयोक्तिः प्रभेदांतरं त्वनुगतरूपाभावादलंकारांतरमेव नचान्यत्वा
दिप्रभेदेषु अन्यत्वादिभिरभेदादीनां निगरणं संभवतीति वाच्यम् अन्यत्वादिभिरभिन्नवस्तुप्रतीतेरेव चमत्कारित्वेनानुभवसिद्धतयान्यत्वादिभिर राम
भेदप्रतीत्यंगीकारे ऽनुभवासंगतेः अन्यतमत्वं तु नालंकारविभाजकोपाधितां भजते चमत्काराप्रयोजकत्वादिति वदंति वस्तुतस्तु रूपकभिन्नत्वे सति २७

चमत्कृतिजनकाहार्यारोपनिश्चयविषयत्वमेवातिशयोक्तिसामान्यलक्षणं रूपकवारणाय सत्यंतं भ्रांतिवारणायाहार्येति उत्प्रेक्षानिरासाय निश्चयेति ।
रूपकातिशयोक्तावभेदस्य द्वितीयप्रभेदे ऽन्यत्वस्य तृतीये संबंधस्य चतुर्थे असंबंधस्य पंचमे सहत्वस्य षष्ठे हेतुप्रसक्तिजन्यत्वस्य सप्तमे पूर्वापरत्वयोश्च
तथाविधारोपविषयत्वसत्त्वात्सर्वत्र लक्षणसमन्वयः नचैवंविधारोपस्य रूपकस्वभावोक्तिभिन्नेषु प्रायशः सर्वालंकारेषु सत्त्वादतिप्रसंग इति वाच्य
म् इष्टापत्तेः अलंकारांतराणां चमत्कारे प्रधानतया तदंगत्वेनावस्थितायाः अतिशयोक्तेरप्राधान्येन व्यपदेशानर्हत्वात् प्राधान्येन व्यपदेशा भवंतीति
न्यायात् अलंकारांतराणामेव प्रधानत्वेन व्यपदेशार्हत्वात् अत एव काव्यप्रकाशकृता विशेषालंकारप्रसंगे ऽभिहितम् सर्वत्रैवंविधे विषये ऽतिशयो
क्तिरेव प्राणत्वेनावतिष्ठते तां विना प्रायेणालंकारत्वाभावात् अत एवोक्तं सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते यत्नो ऽस्यां कविभिः कार्यः को ऽलं

वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगिता संकुचंति सरोजानि स्वैरिणीवदनानि च त्वदंगमार्दवे दृष्टे कस्य चित्ते न भासते ॥

कारो ऽनया विनेति दंडिनाप्युक्तं अलंकारांतराणामप्येकमाहुः परायणं वागीशसहितामुक्तिमिमामतिशयाह्वयामिति इति श्रीमत्तत्सदुपाख्य
वैद्यनाथकृतायामलंकारचंद्रिकायां श्रीमद्रंगराजाध्वरींद्रसूनुश्रीमदप्पयदीक्षितकृतकुवलयानंदटीकायामतिशयोक्तिप्रकरणं संपूर्णम् तुल्यये॰॥
तां लक्षयति वर्ण्यानामिति वर्ण्यत्वेन प्रस्तुतानामित्यर्थः इतरेषां अप्रस्तुतानां एतच्चोभयमपि सावधारणं वर्ण्यानामेव इतरेषामेव वेत्यर्थः॥ बहुव
चनमनेकार्थं द्वयोर्धर्मैक्यस्यापि संग्राह्यत्वात् धर्मैक्यं धर्मस्यैक्यं एकत्वं एको धर्म इति यावत् स च चमत्कारकारी बोध्यः एवं चानेकप्रस्तुतमात्रसंबद्धैक
चमत्कारिधर्मानेकाप्रस्तुतमात्रसंबद्धैकधर्मान्यतरत्वं लक्षणं बोध्यं मुखं विकसितस्मितमित्यादावतिप्रसंगवारणायानेकेति अत्र च मुखप्रेक्षिनादि रू
पानेकवर्ण्यसंबंधो नैको धर्म इति तन्निरासः दीपकवारणाय मात्रेति प्रस्तुताप्रस्तुतप्रभेदसाधारण्याय यान्यतरत्वनिवेशः त्वदंगेति प्रियां प्रति दयितोक्तिः

कु·नं·
चं·टी·
२८

तवांगस्य मार्दवे सौकुमार्ये दृष्टे सति कस्य चित्ते मालत्यादीनां कठोरता न भासते अपितु सर्वस्यैवेत्यर्थः शशिबिभ र्तीति शशभृच्चंद्रस्तस्य लेखा कला गुणक्रिया रूपेति एतच्च तथाविधधर्मस्य प्रायशो गुणक्रियारूपत्वमित्यभिप्रेत्योक्तं नतु लक्षणे तेन रूपेण धर्मस्य निवेशः गौरवात्प्रयोजनाभावाच्च यत्तु कैश्चिदे तद्ग्रंथदूषणलालसैर्धर्मस्य गुणक्रियारूपत्वेन लक्षणे निवेश इत्याशयमारोप्याभिहितं तदेतदापाततः ... खंडावनिमंडलं नम नागपि निश्चिंते मंडले शत्रुमित्रयोरित्यत्राभावरूपधर्मस्यैवान्वयादिति तदिदमापाततोपि न मनोरमं तथाहि ... तदुदाहृतपद्ये निश्चिंते नेति निश्चिंत भेदः शत्रुमित्रमंडलधर्मतयोपात्तः सच गुणस्वरूप एव चिन्ताभाववैशिष्ट्यस्य चिंतानतिरिक्तत्वात् अन्यथा चिंताभावाभावस्याप्यतिरि-

मालतीशशभृल्लेखाकदलीनां कठोरता प्रस्तुतानामप्रस्तुतानां वा गुणक्रियारूपैकधर्मान्वयस्तुल्ययोगिता संकुचंतीति प्रस्तुततु ल्ययोगितायाउदाहरणं तत्र प्रस्तुतचंद्रोदयकार्यतया वर्णनीयानां सरोजानां प्रकाशभीरुस्वैरिणीवदनानां च संकोचरूपैकक्रियान्वयो दर्शितः उत्तरश्लोके नायिकासौकुमार्यवर्णने प्रस्तुतेः प्रस्तुतानां मालत्यादीनां कठोरतारूपैकगुणान्वयः यथा वा संजातपत्रप्रक राञ्चि तानि समुद्वहंति स्फुटपाटलत्वं विकस्वराण्यर्ककराभिमर्शाद्दिनानि पद्मानि च वृद्धिमीयुः ॥ ऋत्वापत्तेः अथ तत्रापि वैपरीत्याद्दिष्टापत्तिमालं बसे भवत्वेवं तु ष्यतु भवान् एवमप्यभावस्य कथं गुणबहिर्भावः जातिक्रियाद्रव्यातिरिक्तस्यैव चतुष्टयी शब्दानां प्रवृत्तिरिति वदद्भिर्वैयाकरणैस्तदनुसारि भिश्चालंकारिकैर्गुणत्वांगीकारात् अतएव जातिगुणयोर्विरोधप्रकाशकैरुदाहृतं गिरयोप्यनुन्नतियुज इति तथा विद्यानाथेनापि अमदः सार्वः भौमोपीति वस्तुतस्तु लक्षणे न तेन रूपेण धर्मस्य निवेशो भिप्रेत इत्यावेदितमतो न काप्यनुपपत्तिरिति स्वैरिणी स्वेनईरितुं शीलमस्यास्तादृशी व्यभि चारिणीति यावत् स्वादीरेरिणोरिति वृद्धिः स्वैरिणी पांसुला च स्यादित्यमरः संजातेति दिनानि पद्मानि च वृद्धिमीयुः प्रापुः कीदृशानि संजातैः पत्राणां प्र

पूर्वपत्राणां वसंतेन विगलनात् तथा स्फुटा विकासिताः पाटला वृक्षविशेषा येषु तानि तेषां भावस्तत्त्वं समुद्वहंतीति शत्रंतं दधानानीत्यर्थः पद्मपक्षे तु स्फुटानि विकसितानि च तानि पाटलानि पाटलवर्णानि तेषां भावस्तत्त्वमित्यादि पूर्ववत् एवमर्कस्य करैः किरणैरभिमर्शनाद्विकस्वराणि भासुराणि दि नानि पद्मानि तु विकासशालीनि नागेंद्रेति नागेंद्राणां गजश्रेष्ठानां हस्ताः शुंडाः कदलीविशेषाश्च परिणाहो विशालता तच्छालिरूपं स्वरूपं लब्ध्वापि य थाक्रमं त्वचि कर्कशत्वात्कठोरत्वादेकांतेन नियमेन शैत्याच्च हेतोर्लोके तस्याः पार्वत्याः ऊर्वोः उपमानाह्वयाः उपमानत्वरहिता जाता इत्यन्वयः तदीपत्वे

नागेंद्रहस्तास्त्वचि कर्कशत्वादेकांतशैत्यात्कदलीविशेषाः लब्ध्वापि लोके परिणाहिरूपं जातास्तदूर्वोरुपमानबाह्याः अत्र ग्रीष्मवर्णने तदीप त्वेन प्रस्तुतानां दिनानां पद्मानां चैकक्रियान्वयः ऊरुवर्णने अप्रस्तुतानां करिकराणां कदलीविशेषाणां चैकगुणान्वयः हिताहिते वृत्तितौल्यम परा तुल्ययोगिता प्रदीयते पराभूतिर्मित्रशात्रवयोस्त्वया अत्र हिताहितयोर्मित्रशात्रवयोरुत्कृष्टभूतिदानस्य पराभवदानस्य च श्लेषेणा भेदाध्यवसायाद्वृत्तितौल्यं यथा वा यश्च निंबं परशुना यश्चैनं मधुसर्पिषा यश्चैनं गंधमाल्याद्यैः सर्वस्य कटुरेव सः अत्र वृश्चति सिंचत्यर्चे ति इत्यध्याहारेण वाक्यानि पूरणीयानि

९नेति तत्कालिकत्वेनेत्यर्थः ग्रीष्मकालिकवस्तुवर्णनस्यैव ग्रीष्मवर्णनरूपत्वादिति भावः एकक्रियेति वृ द्धिप्राप्तिरूपैकक्रियान्वय इत्यर्थः एकगुणेति उपमानबाह्यत्वरूपैकगुणेत्यर्थः। हिताहिते इति हिताहितविषये इत्यर्थः वृत्ति तौल्यमिति वृत्तिर्वर्तनं व्यव हरणमिति यावत्तस्य तौल्यं साम्यं अपरा पूर्वोक्तविलक्षणा प्रदीयत इति परा उत्कृष्टा भूतिः संपत्तिरेव पराभूतिः पराभवः शत्रूणां समूहः शात्रवं तस्य समूह इ त्यण् पराभवदानस्येति शत्रुसंबंधिपराभवसंपादनस्येत्यर्थः पराभवस्य मुख्यदानासंभवात् अतएव संप्रदानत्वाभावान्मित्रशात्रवयोरिति संबंधसामान्ये ष ष्ठी श्लेषेण पराभूतिपदश्लेषेण यथा वेति अत्र च शब्दा अप्यर्थाविरोधद्योतकाः अत्रेति। योपि निंबं परशुना छिनत्ति यो ... मधुयुक्तेन सर्पिषा आज्येन सिंचति योप्येनं

विशेषणानि पूर्वार्धोक्तानि तस्य शरीरस्य व्यासस्थमिति राजानं प्रति कवेरुक्तिः हे देवराजन् त्वद्गुणानां वृंदस्य समूहस्य वर्णने कर्तुमहं कथं शक्तुयां शक्नुयां कोभवेयमित्यन्वयः कुतस्तत्राह यतोहं एकरूपतयास्थितं वेदसमूहं न व्यास्थं अनेकशाखारूपेण न विस्तारितवान् तथा च तत्कर्ता व्यासो न भवामीति व्यज्यते एवमग्रेपि वल्मीकतो वल्मीकात् जन्मा स्यास्तीति जन्मी न भवामीति शेषः तथा च नाहं वाल्मीकिरिति अच्युतस्य नाभौ नाभवं नोत्पन्नइत्यनेन नाहं चतुर्मुख इति। सुमहद्भाष्यं महाभाष्यं च नाभाषिषं न भाषितवानित्यनेन नाहं सहस्रजिह्वः शेष इति चित्रो विचित्र अर्थो यस्यास्तां हल्लकथां

व्यास्थं नैकतया स्थितं श्रुतिगणं जन्मी न वल्मीकतो नाभौ नाभवमच्युतस्य सुमहद्भाष्यं च नाभाषिषं चित्रार्थां न हल्लकथामचकथं सुत्राम्णो नासं गुरुर्देव त्वद्गुणवृंदवर्णनमहं कर्तुं कथं शक्नुयां। अत्र श्रुतिगणं न व्यास्थमित्यादीनि विशेषणानि स्वस्मिन्व्यासाद्यसाधारणकार्यकर्तृत्वनिषेधमुखेन नाहं व्यास इत्याद्यभिप्रायगर्भाणि तत्राद्ययोरुदाहरणयोरेकैकं विशेषणं समनंतरयोः प्रत्येकं बहूनि विशेषणानि तत्रापि प्रथमोदाहरणे सर्वाणि विशेषणान्येकाभिप्रायगर्भाणि पदार्थरूपाणि च द्वितीयोदाहरणे भिन्नाभिप्रायगर्भाणि वाक्यार्थरूपाणि चेति भेदः एतेषु व्यंग्यार्थसद्भावेपि न ध्वनिव्यपदेशः शिवस्य तापहरणे मन्मथस्यैकैसुतिकन्यायेन सर्वधन्वि धैर्यभंजकत्वे शरीरसंरक्षणार्थे पापमाचरतां मूढत्वे स्वस्य वर्णनीयराजगुणकथनाशक्तत्वे च वाच्यस्यैवोपस्कारकत्वात् ११ न अचकथं कथितवानित्यनेन नाहं तद्व्यक्ताशिवोगुणाढ्यो वेति

सुत्राम्णि इंद्रे गुरुरुपदेशको नासमित्यनेन नाहं वाक्पतिरिति च व्यज्यते उक्तेषूदाहरणेषु वैलक्षण्यं दर्शयति तत्रेत्यादिना एकैकं एकस्य विशेष्यस्य एकमेव समनंतरयोः अनंतरोक्तयोः प्रत्येकं एकं विशेष्यं प्रति तत्रापि तयोर्मध्येपि एकाभिप्रायगर्भाणि एकार्थाभिप्रायपूर्वकाणि वाक्यार्थेति न व्यास्थमित्यादिनिषेधवाक्यार्थषट्कस्योक्तरीत्या हेतुत्वेनां निमवाक्यार्थे विशेषणत्वादिति भावः तेषु उक्तोदाहरणेषु ध्वनिव्यपदेशः ध्वनिव्यवहारः तत्र हेतुमाह तापहरणे ६१

तापहरणे इत्यादि सप्तम्यंतचतुष्टयस्य वाच्य इत्यनेन सामानाधिकरण्येनान्वयः उपस्कारकत्वादिति तथा च परांगरूपगुणीभूतव्यंग्यभेदत्वान्न ध्वनिव्यवहार इति भावः नन्वेवमपि यथाश्रुतलक्षणस्य निःशेषच्युतेत्यादिध्वनावतिव्याप्तिरित्यत आह अतएवेति वाच्योपस्कारकत्वादेवेत्यर्थः परिकरत्वात् अंगत्वात् तथा च परिकरपदमहिम्ना प्रकृतार्थोपपादकत्वस्य व्यंग्यविशेषणस्य लाभान्नातिव्याप्तिरिति भावः अपुष्टार्थेति भावप्रधानं उक्तत्वादिति अर्थोऽपुष्टः कष्टो व्याहतपुनरुक्तदुःक्रमग्राम्याइत्यादिनाऽलंकारिकैरुक्तत्वादित्यर्थः कथं तर्हि तैरेवास्यालंकारत्वेन कथनमत आह एकनिष्ठेति तादृशेति साभिप्र

अतएव व्यंग्यस्य वाच्यपरिकरत्वात्परिकर इति नामास्यालंकारस्य केचित्तु निष्प्रयोजनविशेषणोपादाने अपुष्टार्थत्वदोषस्योक्तत्वात्सप्रयोजनत्वविशेषणस्य दोषाभावमात्रं न कश्चिदलंकारः एकनिष्ठतादृशानेकविशेषणोपन्यासे परं वैचित्र्यविशेषात्परिकर इति अलंकारमध्ये परिगणित इत्याहुः वस्तुतस्त्वनेकविशेषणोपन्यास एव परिकर इति न नियमः श्लेषयमकादिष्वपुष्टार्थदोषाभावेन तत्रैकस्यापि विशेषणस्य साभिप्रायस्य विन्यासे विच्छित्तिविशेषसद्भावात्परिकरोपपत्तेः यथा अतियजेत निजां यदि देवतामुभयतश्च्यवते जुषतेप्यघं क्षितिभृतैव सदेवतकाव यं वनवतानवता किमहिद्रुहा अत्र हि पुरुहूतपूजोद्युक्तान्नंदादीन्प्रति भगवतः कृष्णस्य वाक्ये गोवर्धनगिरिरेव चास्माकं रक्षकत्वेन देवतमिति स एव पूजनीयः ११ येत्यर्थः दोषाभावेनेति अपुष्टार्थत्वस्य दोषत्वाभावेनेत्यर्थः उद्भटालंकारसंपत्त्या सहृदयवैमुख्यरूपदूषकताबीजाभावाभादिति भावः विच्छित्तिश्चमत्कृतिः परिकरत्वोपपत्तेः परिकरस्यालंकारत्वोपपत्तेः तत्र दोषस्याप्रसक्त्या विच्छित्तिविशेषस्य तदभावप्रयुक्तत्वासंभवात्तत्प्रयोजकमलंकारत्वमावश्यकमिति भावः यमकस्थले उदाहरति यथेति निजां देवतामतिक्रम्य यदि यजेत अर्थाद्देवतांतरं पूजयेत् तदा उभयतः लोकद्वयात् च्यवते भ्रश्यति अघं पापमपि जुषते सेवते प्राप्नोतीति यावत् का निजा देवता तत्राह वयं वनव

ताप्रशस्तवनयुक्तेनक्षितिभृतागोवर्द्धनगिरिणे वसदैवतकाः दैवतसहिताः सएवास्माकंदैवतमित्यर्थः अनवता अरक्षकेण अहिद्रुहाइंद्रेण किंप्र
योजनमितिशेषः अहिर्वृत्रासुरः अहिर्वृत्रासुरेसर्पेद्रुतिविश्वः नन्वेवंसति तत्रैवालंकारतास्यान्ननुसुधांशुकलितोत्तंसइत्यादावत आह एवमितिवि
च्छित्तिविशेषेति दोषाभावप्रयुक्तविच्छित्तिव्यावृत्तेत्यर्थः ननुयमकादावपितादृशविच्छित्तिविशेषमानाभावः विच्छित्तिसामान्यंतुपर्युदस्तदोषाभावेनाप्युप
पन्नं आपत्कालपर्युदस्तस्यमृच्छोचहीनतादोषस्याभावेनेवतदानीमपिमृच्छोचकर्तुरतिशयाधानमितिनालंकारत्वसिद्धिरित्यत आह अपिचेति भ
स्मोद्धूलनभद्रमस्तुभवतेरुद्राक्षमालेशुभंहासोयानपरंपरेगिरिसुताकांतालयालंकृते अद्याराधनतोषितेनविभुनायुष्मत्सपर्यासुखालोकोच्छेदिनि

नत्वरक्षकः पुरुहूतइत्येवंपरेवनवतेतिगोवर्द्धनगिरेर्विशेषणंकाननवत्वान्निर्झरादिमत्वाच्चपुष्पमूलफलतृणादिभिरारण्यकानाम
स्माकमस्मद्धनानांगवांचायमेवरक्षकइत्यभिप्रायगर्भं एवमत्रसाभिप्रायैकविशेषणविन्यासस्यापिविच्छित्तिविशेषवशादस्यसाभि
प्रायस्यालंकारत्वसिद्धौअन्यत्रापिसुधांशुकलितोत्तंसइत्यादौतस्यात्मलाभोननिवार्यते अपिच एकपदार्थहेतुकं काव्यलिंगमलं
कारइतिसर्वसंमतं तद्वदेकस्यापिविशेषणस्यसाभिप्रायस्यालंकारत्वयुक्तमेव साभिप्राये विशेष्येतुभवेत्परिकरांकुरः चतुर्णांपुरु
षार्थानांदातादेवश्चतुर्भुजः अत्रचतुर्भुजइतिविशेष्यंपुरुषार्थचतुष्टयदानसामर्थ्याभिप्रायगर्भं १ मोक्षनामनिमहामोहे निलीयामहइत्यादौ
मोक्षस्यमहामोहत्वेसुखालोकोच्छेदिनित्येकपदार्थोहेतुरितिकाव्यलिंगमलंकारत्वेनयथास्वीकृतं ननुनिर्हेतुत्वदोषाभावमात्रतयाविच्छित्तिविशेष
स्यानुभवसिद्धित्वात्तथेहापीतिभावः इत्यलंकारचंद्रिकायांपरिकरप्रकरणम् साभिप्रायइति अत्रविशेषणपदस्थानेविशेष्येतिप्रक्षिप्यपूर्ववल्लक्ष राम
णंबोध्यम् तच्चपरिकरे अतिव्याप्तिवारणार्थंलक्ष्येलक्षणंसंगमयति अत्रेति यद्यपिदेवांतरव्यावर्त्तकतयाचतुर्भुजइतिविशेषणम् ॥ ॥ ॥ ४४

तथापिनृपादिसाधारणदेवपदशक्तेर्विष्णोर्नियमनेनविशेष्यप्रतीत्यौपयिकतयाविशेष्यपदत्वमभिमतंबोध्यम् असंदिग्धमुदाहरति फणींद्रइति राजा
नंप्रतिकवेरुक्तिः तवगुणान्वक्तुंफणींद्रःशेषः समर्थइत्यध्याहार्यं एवमग्रेपि हैहयाधिपः कार्त्तवीर्यः आखंडलइंद्रः उभयत्रगुणानित्यनुषज्यते एषः
मर्त्यधर्मः अहंक्वतेगुणाः क्वेति क्वशब्दोमहदंतरंसूचयतः सहस्रमुखत्वादीत्यादिनासहस्रबाहुत्वसहस्रनयनत्वयोः संग्रहः अत्रानेकेषांविशे
ष्यपदानांतत्तदभिप्रायगर्भत्वंविशेषः इतिपरिकरांकुरप्रकरणम् श्लेषंलक्षयति नानार्थेति नानार्थस्यशब्दस्यसंश्रयोयोजनंश्लेषइतिलक्षणम्

यथावा फणींद्रस्तेगुणान्वक्तुंलिखितुंहैहयाधिपः द्रष्टुमाखंडलःशक्तः क्वाहमेषक्वतेगुणाः फणींद्रइत्यादिविशेष्यपदानिसहस्र
वदनाद्यभिप्रायगर्भाणि। नानार्थसंश्रयः श्लेषोवर्ण्यावर्ण्योभयाश्रितः सर्वदोमाधवःपायात्सयोगंगामदीधरत् अब्जेनत्वन्मुखं
तुल्यंहरिणाहितसक्तिना उच्चरद्भूरिकीलालःशुशुभेवाहिनीपतिः अनेकार्थशब्दविन्यासःश्लेषः सचत्रिविधः प्रकृतानेकविष
यः अप्रकृतानेकविषयः प्रकृताप्रकृतानेकविषयश्च सर्वदेत्यादिक्रमेणोदाहरणानि तत्रसर्वदोमाधवइतिस्तोतव्यत्वेनप्रकृतयो
र्हरिहरयोःकीर्त्तनंप्रकृतश्लेषः अब्जंकमलं अब्जश्चंद्रस्तयोरुपमानमात्रत्वेनाप्रकृतयोःकीर्त्तनमित्यप्रकृतश्लेषः वाहिनीपतिः
सेनापतिः समुद्रश्चतत्रसमितोशस्त्रप्रहारोत्पतद्रुधिरस्यसेनापतेरेववर्णनंप्रकृतमितिप्रकृताप्रकृतश्लेषः १ वर्ण्येत्यादिविभागः वर्ण्यं
चावर्ण्यंचवर्ण्यावर्ण्योभयंचएतन्त्रयाश्रितस्तद्विषयइत्यर्थः सर्वेति सर्वदःसमाधवःपायात्यः अगंगोवर्धनपर्वतंगांपृथ्वींचवराहावतारेधृतवानितिवि
ष्णुपक्षे हरपक्षेतु सउमाधवःसर्वदापायात् योगंगांधृतवानित्यर्थः हरिणेनमृगेणांकरूपतयाआहितासक्तिःसंयोगोयस्येति चंद्रपक्षे हरिणासूर्येणेति
कमलपक्षेउच्चरत्शस्त्रपातैरुद्गच्छत्कीलालंरुधिरंयस्यसवाहिनीपतिःसेनापतिः तथावाहिनीनांनदीनांपतिः समुद्रश्चेतिपक्षेकीलालंजलंसमितौसंग्रामे

त्रातइति येनकरुणायुक्तोतःकरणेनद्रोहकर्त्तापि अदरोभयशून्यः काकस्त्रातोरक्षितः नतुहतः सपवित्रनामारणेख्यातः विभूरामोमेशरणमस्त्वित्य र्थः कृष्णपक्षेतुकाकोदरः कालियसर्पः पूतनायाराक्षस्यामारणेनख्यातइतिविशेषः नीतानामिति दयितांप्रतिनायकोक्तिः तवईक्षणेनेत्रेकमलानांएच्या नांहरिणानांचसदृशेःस्तइत्यन्वयः कीदृशानांवनेजले अरण्येचवृद्धिंप्राप्तानां तथालुब्धैर्लोभशीलैर्भूरिभिःशिलीमुखैः भ्रमरैराकुलीभावंव्याप्ततांनी

यथावा त्रातःकाकोदरोयेनद्रोग्धापिकरुणात्मना पूतनामारणाख्यातः समेस्तुशरणंप्रभुः नीतानामाकुलीभावंलुब्धैर्भूरिशिलीमु खैः सदृशेवनवृद्धानांकमलानांत्वदीक्षणे असावुदयमारूढः कांतिमानरक्तमंडलः राजाहरतिलोकस्यहृदयंमृदुलैःकरैः तत्राद्य स्तातव्यत्वेनप्रकृतयोःरामकृष्णयोःश्लेषः द्वितीयेउपमानत्वेनाप्रकृतयोः पद्महरिणयोःश्लेषः तृतीये राजाहरतिलोकस्येतिचंद्रव र्णेनप्रस्तावेप्रकृतस्यप्रत्यग्रोदितचंद्रस्याप्रकृतस्यनवाभिषिक्तस्यनृपतेःश्लेषः यदत्रप्रकृताप्रकृतश्लेषोदाहरणेशब्दशक्तिमूल ध्वनिमिच्छंतिप्राचः तत्प्रकृताप्रकृताभिधानमूलकस्योपमादेरलंकारस्यव्यंग्यत्वाभिप्रायं नत्वप्रकृतार्थस्यैवव्यंग्यत्वाभिप्रायं अप्रकृ तार्थस्यापिशक्त्याप्रतिपाद्यस्याभिधेयत्वावश्यंभावेनव्यक्त्यनपेक्षणात् यद्यपिप्रकृतार्थेप्रकरणबलाज्झटितिबुद्धिस्थेसत्येवपश्चान्नृ पतितद्धाम्यधनादिवाचिनांराजकरादिपदानामन्योन्यसन्निधानबलात्तद्विषयशक्त्यंतरोन्मेषपूर्वकमप्रस्तुतार्थः स्फुरेत् ॥ ७ ॥

तानामितिपद्मपक्षे हरिणपक्षेतुलुब्धैर्व्याधैःकर्तृभिर्भूरिशिलीमुखैर्बाणैःकरणभूतैराकुलीभावंचपलतांनीतानामित्यर्थः मृगप्रभेदेकमलइतिविश्वः असाविति उदयंशैलं अभिवृद्धिंच रक्तंरक्तवर्णं अनुरक्तंच मंडलंबिंबंदेशश्च राजाचंद्रोनृपश्च मृदुलैरभिनवैःअल्पैश्चकरैःकिरणैःग्राह्यधनैश्चप्रत्यग्रो दितेति अभिनवोदितेत्यर्थः ननुप्रकरणेनाभिधायानियमनादप्रकृतार्थस्यव्यंग्यत्वमेवेतिकथंश्लेषइत्याशंक्याह यदिति अलंकारस्येति ॥ ७ ॥ राम ४५

नचैवंशब्दशक्तिमूलवस्तुध्वनेरुच्छेदइतिवाच्यम् शनिरशनिश्चतमुच्चैर्निहंतिकुप्यसिनरेंद्रयस्मैत्वं यत्रप्रसीदसिपुनःसभात्युदारोनुदारश्चेत्यत्रशनि विरुद्धरूपेप्रस्तुतेःशनिशब्देनाभिधयाप्रतीयमानेपितन्मूलकस्यविरुद्धावपित्वदनुवृत्तेनार्थमेकंकार्यंकुरुतइतिवस्तुध्वनिरशनिशब्दव्यक्तिमूल स्यसंभवात् अलंकारस्येत्यस्योपलक्षणत्वात् अन्योन्यसन्निधानबलात् परस्परार्थसंबंध्यर्थवाचकशब्दसमभिव्याहाररूपशब्दान्तरसन्निधि बलात् तथाचाप्रकृतेप्यभिधानियामकमस्तीतिभावः एतावता पूर्वापरभावमात्रेणतस्य अप्रकृतार्थस्यगूढश्लेषइतिगूढत्वंचाप्रकृतत्वेनद्वितीयार्थ स्यशीघ्रमप्रत्ययात् अयमिति माघेरैवतकगिरिवर्णनं अयंगिरिस्तटीःबिभर्तीत्यन्वयः किंभूताःअतिजरठाः अत्यंतकठिनाःप्रकामगुर्वीः अतिमहत्यः

नचैतावतातस्यव्यंग्यत्वं शक्त्याप्रतिपाद्यमानेसर्वथैवव्यक्त्यनपेक्षणात्पर्यवसितेप्रकृतार्थाभिधानेपश्चात्स्फुरतिचेत्कामंगूढश्लेषो भवतु अस्तिचान्यत्रापिगूढश्लेषः अयमतिजरठाःप्रकामगुर्वीरलघुविलंबिपयोधरोपरुद्धाः सततमसुमतामगम्यरूपाः परि णतदिक्करिकास्तटीर्बिभर्त्ति मंदमग्निमधुरर्यमोपलादर्शितश्वयथुश्चाभवत्तमः दृष्टयस्तिमिरजंसिषेविरे दोषमोषधिपतेरसं निधौ अत्रहिसमासोक्त्युदाहरणयोःप्राकरणिकेर्थेप्रकरणवशात् झटितिबुद्धिस्थेविशेषणसाम्यादप्रकृतोपिवृद्धवेश्यावृत्तांतादिः

अलघुभिर्विलंबमानैर्मेघैर्व्याप्ताः निरंतरंप्राणिनामगम्यरूपाः परिणताःतिर्यक्कृतदंतप्रहारिणःदिग्गजायासुताः वृद्धवेश्यापक्षेतु जरठाःजीर्णाः पयोध राःकुचाः अगम्याःसंगमायोग्याः परिणतेप्रकटेदिक्करिकेयासांताइत्यर्थः दिक्कुवत्तुलंदशनक्षतं करिकानखक्षतं दिक्कृदष्टंवर्तुलाकारंकरिकानखरेखि केतियादवः मंदमिति ओषधीनांपत्युश्चंद्रस्यासन्निधौसति अर्यमोपलाः सूर्यकांतामंदीभूतमग्निंधृतवंतः तमःदर्शितःश्वयथुःपुष्टत्वंयेनतथाऽभवत् दृष्टयस्तिमिरजंदोषंआंध्यंसिषेविरेपक्षांतरेओषधिपतिर्वैद्यःएवंमंदाग्नित्वशोथतिमिराणिरोगविशेषाः वृत्तांतादिरित्यादिपदाद्रोगिवैद्यवृत्तांतः परिग्र

अभंगश्लेष इति तथा च श्लेषस्थले व्यंजनाविरहाद्यकृते तत्स्वीकारे श्लेषव्यवहारः सर्वेषामनुपपन्नः स्यादिति भावः रम्या इति माघ एव द्वारकावर्णनं य
स्यां द्वारकायां युवानो वधूभिः समं वलभीः प्रासादोपरितनगृहाणि असेवंत सेवितवंतः किंभूताः रम्या इति हेतोः पताका वैजयंतीः प्राप्तवतीः विविक्ताः वि
जना इति हेतोः रागं रतिं वर्द्धयंतीः नमंतिवलीका निछादनपटलप्रांता यासां ताः वधूपक्षे पताकाः सौभाग्यानि पताका वैजयंत्यां स्यात्सौभाग्यनाटकांक
योरिति मेदिनी रागमनुरागं विविक्ताः सतीत्वेन पवित्राः नमन्त्रिवलीकाश्चेति नचेति यत इत्यस्य इत्यत्रेवाक्षिप्तः श्लेषो भवेदित्यग्रे तनेनान्वयः ए

तत्र समासोक्तिरभंगश्लेष इति सर्वेषामभिमतमेव एवमन्यत्रापि गूढश्लेषे ध्वनिबुद्धिर्नकार्या यथा वा रम्या इति प्राप्तवतीः पताका रागं
विविक्ता इति वर्द्धयंतीः यस्यामसेवत नमद्वलीकाः समं वधूभिर्वलभीर्युवानः अत्र द्वितीयांत विशेषणसमर्पितार्थांतराणां न शब्दसा
मर्थ्येन वधूभिरन्वयः विभक्तिभेदात् न च विभक्तिभेदेपि तदन्वयाक्षेपकं साधर्म्यमिह निबद्धमस्ति यतः एतस्मिन्नधिकपयः श्रियं वहं
त्यः संक्षोभं पवनभुवा जवेन नीताः वाल्मीकेररहितरामलक्ष्मणानां साधर्म्यं दधति गिरां महासरस्यः इत्यत्रेवाक्षिप्तः श्लेषो भवेत्
सममित्येतत्तु क्रियाविशेषणं सहार्थत्वेनाप्युपपन्नं वधूषु श्लिष्टविशेषणार्थान्वयात्प्राक् द्राक् प्रतीतं साम्यं नालंबते ११ तस्मिन्निति तत्रैव

रैवतकगिरिवर्णनं एतस्मिन् गिरौ महत्यः सरस्यः वाल्मीकेर्मुनेर्गिरां साधर्म्यं सादृश्यं दधति धारयंति किंभूतानां गिरां अरहितौ संबद्धौ रामलक्ष्मणौ यासु
तथाभूतानां सरसीपक्षे अरहिताः संयुक्ता रामाः पतयो यासां तथाभूता लक्ष्मणाः सारसवनिता यासु ता इति किंभूताः सरस्यः अधिकां जलशोभां वहंत्यः पवनसं
भूतेन वेगेन संक्षोभं तरंगाकुलत्वं नीताः प्रापिताः वाल्मीकिगिरस्तु अधिकाः कपयो यासु ताः पवनभुवा हनूमता वेगेन निजेन संक्षोभं सुद्धटत्वं प्रापिता इति न
न्वत्रापि सममित्यस्य तुल्यार्थत्वात् साधर्म्यनिबंधोस्तीति कुतो न श्लेषाक्षेपस्तत्राह सममिति द्राक् शीघ्रं साम्यार्थं साम्यार्थकत्वं तथा चानुपपत्त्यभावात् न मूलकआ

कथं तर्हि तदवगमस्तत्राह अर्थसौंदर्येति विशेषणानां वधूभिरन्वये चमत्कृतेरनुसंधानात् तदन्वयतात्पर्यग्रह इति भावः तदनु श्लेषानुसंधानानंतरं
तद्बलात् श्लेषबलात् साधर्म्यार्थेति साधर्म्यरूपार्थस्येत्यर्थः अर्थसाम्याभावेपि सकलकलं पुरमेतज्जातं संप्रति सुधांशुबिंबमिवत्यादिवच्छब्द
साम्यस्य संभवादिति भावः एवकारेण व्यंग्यत्वव्यवच्छेदः तत्र तयोर्मध्ये शब्देति जतुकाष्ठन्यायेन शब्दयोरेव श्लिष्टत्वादिति भावः अर्थेति श
ब्दाभेदादेकवृंतगतफलद्वयन्यायेनार्थयोरेव श्लिष्टत्वादिति भावः केचित् अलंकारसर्वस्वकारादयः उभयमपीति सभंगाभंगश्लेषद्वयमपीत्यः

तस्मादर्थसौंदर्यबलादेव तदन्वयानुसंधानमिति गूढश्लेषः तदनु तद्बलादेव समशब्दस्य साधर्म्यार्थकल्पनमिति वाच्यस्यैवोपमालं ॥
कारस्यागमयमित्यलं प्रपंचेन॥ तस्मात्सिद्धं श्लेषत्रैविध्यं एवं च श्लेषः प्रकारांतरेणापि द्विविधः संपन्नः उदाहरणगतेषु अब्जकी
लालवाहिनीपत्यादिशब्देषु परस्परविलक्षणं पदभंगमनपेक्ष्यानेकार्थक्रोडीकारादभंगः सर्वदो माधवः योगेगां हरिणाहितसक्ति
नेत्यादिशब्देषु परस्परविलक्षणं पदभंगमपेक्ष्य नानार्थक्रोडीकारात्सभंगः श्लेष इति तत्र सभंगश्लेषः शब्दालंकारः अभंगश्लेष
स्त्वर्थालंकार इति केचित् उभयमपि शब्दालंकार इत्यन्ये उभयमप्यर्थालंकार इति स्वाभिप्रायः एतद्विवेचनं तु चित्रमीमांसायां द्रष्टव्यं।

र्थः शब्दस्य परिवृत्त्यसहत्वेनान्वयव्यतिरेकाभ्यां तद्गतत्वावधारणादिति भावः अन्ये मम्मटभट्टाः नन्वभिप्रा ११ अप्रस्तुतप्रशंसा स्यात्सा
यस्यार्थालंकारमध्यकथनादवगतस्यापि विशेषतः कथनमंतरेण कथमुपपत्तिरित्याशंक्याह एतदिति यद्यप्युत्प्रेक्षाग्रंथानंतरं चित्रमीमांसानका
पि दृश्यते तथाप्ययमाशय उन्नीयते चमत्कारेर्थमुखप्रेक्षित्वादर्थालंकारत्वमिति अनुप्रासयमकादेस्तु न चमत्कारेर्थमुखप्रेक्षित्वमिति न तेषामर्था
लंकारत्वमपि तु शब्दवैचित्र्यात् शब्दालंकारमेवेति इत्यलंकारचंद्रिकायां श्लेषप्रकरणम् अप्रस्तुतेति सा अप्रस्तुतप्रशंसा प्रस्तुताश्रया प्रस्तुत
त्व

कु·नं·
टी·चं·
५७

माप्रयः प्राधान्येन तात्पर्यविषयो यस्याः सा तथाभूता प्रस्तुतपरमप्रस्तुतवर्णनमप्रस्तुतप्रशंसेत्यर्थः एक इति कृती कुशलः शकुंतेषु पक्षिषु मध्ये पश्यात
कः शक्रादिंद्रादन्यं न याचत इत्यर्थः कार्य इति कार्ये प्रस्तुते सति तदन्यकारणस्य वचः प्रतिपादनं निमित्ते कारणे प्रस्तुते सति तदन्यस्य कार्यस्य एवं
सामान्ये प्रस्तुते सति तदन्यस्य विशेषस्य विशेषे प्रस्तुते सति तदन्यस्य सामान्यस्य तुल्ये प्रस्तुते तदन्यस्य तत्सदृशस्येत्यर्थः। अन्यशब्दस्य प्रतिसंबं

एकः कृती शकुंतेषु योन्यं शक्रान्न याचते यत्राप्रस्तुतवृत्तांतवर्णनं प्रस्तुतवृत्तांतावगतिपर्यवसायि तत्राप्रस्तुतप्रशंसालंकारः अप्रस्तुत
वृत्तांतवर्णनेन प्रस्तुतावगतिश्च प्रस्तुताप्रस्तुतयोः संबंधे सति भवति संबंधश्च सारूप्यं सामान्यविशेषभावः कार्यकारणभावो वा संभवति त
त्र सामान्यविशेषभावे सामान्याद्विशेषस्य विशेषाद्वा सामान्यस्यावगतौ द्वैविध्यं कार्यकारणभावेपि कार्यात्कारणस्य कारणाद्वा कार्यस्या
वगतौ द्वैविध्यं सारूप्याच्चैक एको भेद इत्यस्याः पंच प्रकाराः यदाहुः कार्ये निमित्ते सामान्ये विशेषे प्रस्तुते सति तदन्यस्य वचस्तुल्ये तुल्यस्येति
च चपँधेति तत्र सारूप्यनिबंधनाप्रस्तुतप्रशंसोदाहरणं एकः कृतीति अत्राप्रस्तुतचातकस्य प्रशंसा प्रशंसनीयत्वेन प्रस्तुते तत्सरूपे क्षुद्रे
भ्यो याचनान्निवृत्ते मानिनि पर्यवस्यति यथा वा आबद्धकृत्रिमसटाजटिलांसभित्तिरारोपितो मृगपतेः पदवीं यदि श्वा मत्तेभकुंभतटपाट
नलंपटस्य नादं करिष्यति कथं हरिणाधिपस्य अत्र शुनकस्य निंदा निंदनीयत्वेन प्रस्तुते तत्सरूपे कृत्रिमवेषव्यवहारादिमात्रेण विद्वत्ता
भिनयवति वैधेये पर्यवस्यति

९ धिपरत्वात् तत्सरूपे तत्सदृशे आबद्धेति आबद्धाः याः कृत्रिमाः सटाः स्कंधलोमानि ताभिर्जटिला व्याप्ता अंसभित्तिः
स्कंधदेशो यस्य एवंभूतः श्वा शुनकः मृगपतेः सिंहस्य पदवीं स्थानं यद्यारोपितः तादृशसटायुक्तत्वेन सिंहसाम्यं प्रापित इत्यर्थः तथापि [illegible]तानामिभानां गजानां
कुंभतटस्य पाटने विदारणे लंपटस्य व्यसनिनो हरिणानामधिपस्य नादं सिंहनादं कथं करिष्यतीत्यर्थः अभिनयवति अनुकुर्वतीति स प्रस्तुते वैधेये मूर्खे मूर्खवै

अंतरिति छिद्राणि रंध्राणि दोषस्थानानि च कंटकाः शूकाः खलाश्च भंगुराः भंगशीलाः गुणाः सौभाग्यादयः तंतवश्च अत्र स्तुतिनिंदोदासीनस्वरूपाख्यानमा
त्रमिति श्लिष्टविशेषणत्वमिति च भेदः एवं चेति उक्तोदाहरणेषु प्रस्तुतपरस्याप्रस्तुतवर्णनस्य त्रिरूपत्वे सतीत्यर्थः विधायेति [illegible]नराः मनुष्याः सक्रो
धैः रौशत्रौ वैरं विधायोदासीना भवंति ते कक्षे तृणेषु दहनं निक्षिप्य अभिमारुतं पवनाभिमुखं शेरते निद्रां कुर्वंतीत्यर्थः सौहार्देति सौहार्दानि मित्राण्ये

यथा वा अंतश्छिद्राणि भूयांसि कंटका बहवो बहिः कथं कमलनालस्य मा भूवन् भंगुरा गुणाः अत्र कमलनालवृत्तांतकीर्तनं तत्सरूपे बहिः
खलेषु जाग्रत्सु भ्रातृपुत्रादिभिरंतः कलहं कुर्वाणे पुरुषे पर्यवस्यति एवं चलक्ष्यलक्षणयोः प्रशंसाशब्दः स्तुतिनिंदास्वरूपाख्यानसाधारणे
कीर्तनमात्रपरो द्रष्टव्यः सामान्यनिबंधना यथा विधाय वैरं सामर्षे नरोऽरौ य उदासते प्रक्षिप्योदर्चिषं कक्षे शेरते तेऽभिमारुतं अत्र प्रागेव सा
मर्षे शिशुपाले रुक्मिणीहरणादिवैरं दृढीकृतवता कृष्णेन तस्मिन्नुदासितुमयुक्तमिति वक्तव्येऽर्थे प्रस्तुते तत्समर्थनार्थं सामान्यमभिहितं य
था वा सौहार्दस्वर्णरेखाणामुच्चावचभिदाजुषां परोक्षमिति कोप्यस्ति परीक्षानिकषोपलः अत्र यदि त्वं प्रत्यक्षमिव परोक्षेपि मम हितमाचर
सि तदा त्वमुत्तमः सुहृदिति विशेषे वक्तव्यत्वेन प्रस्तुते सामान्यमभिहितं विशेषनिबंधना यथा अंकाधिरोपितमृगश्चंद्रमा मृगलांछनः केस
री निष्ठुरक्षिप्तमृगयूथो मृगाधिपः अत्र कृष्णं प्रति बलभद्रवाक्ये माद्दृग्व दूषणपरे पूर्वप्रस्तावानुसारेण क्रूर एव ख्यातिभाग्भवति न तु मृदुरिति सा
मान्ये वक्तव्ये तत्समर्थनायाप्रस्तुतो विशेषोभिहितः एवं बृहत्कथादिषु सामान्यतः कंचिदर्थं प्रस्तुत्य तद्विवरणार्थमप्रस्तुतकथाविशेषोदा
हरणेष्वियमेवाप्रस्तुतप्रशंसा द्रष्टव्या कारणनिबंधना यथा

९ व स्वर्णरेखा इति रूपकम् तासां परीक्षणे निकषोपलः परोक्षमिति संज्ञितः कोप्य
स्तीत्यन्वयः अंकेति मृगलांछन इत्युच्यत इति शेषः निष्ठुरं क्षिप्तानि निरस्तानि मृगयूथानि येन तादृशः केसरी सिंहो मृगाधिप इत्युच्यत इति च शेषः ॥५८॥

हृतेति धृतो गंभीरायां खन्यां गतैः खस्याकाशस्य नीलिमा येनेति मंडलविशेषणम् आश्रित्येति हे देव प्रतिमासंभिन्ना अमृतद्युतयश्चंद्रास्ते विष्णोः पद
माकाशमेव पदं चरणमाश्रित्य देहस्य क्षये उपनतं संपन्नं दिव्यपदस्याभिमुखत्वं एषामेवं भूताः संतस्त्वदास्यरूपेषु हृदि मित्रेनूनं लावण्यस्वरूपस्य पुण्यस्य

हृतसारमिवेंदुमंडलं दमयंतीवदनाय वेधसा कृतमध्यविलं विलोक्यते धृतगंभीरखनीखनीलिम अत्रापाकरणि केंदुमंडलगतनयो
त्प्रेक्षमाणेन दमयंतीवदननिर्माणार्थसारांशहरणेन तत्कार्यरूपं वर्णनीयतया प्रस्तुतं दमयंतीवदनगतं लोकोत्तरं सौंदर्यं प्रतीयते। यः
याव मदीयवरद राजस्तवे आश्रित्य नूनममृतद्युतयः पदं ते देहक्षयोपनतदिव्यपदाभिमुख्याः लावण्यपुण्यनिचयं सुहृदि त्वदास्ये विन्य
स्य यांति मिहिरप्रतिमासभिन्नाः अत्राप्राकरणिकचंद्रकर्तृकेत्प्रेक्षमाणे नलावण्यपुण्यनिचयविन्यासेन कारणेन तत्कार्यमनंतको
टिचंद्रलावण्यशालित्वं अनन्यमुखसाधारणं भगवन्मुखे वर्णनीयतया प्रस्तुतं प्रतीयते तथाहि चंद्रस्तावन्मंत्रलिंगाद्वृद्धिक्षया
भ्यामभेदेपि भेदाध्यवसायाद्वा प्रतिमासंभिन्नत्वेन वर्णितः तेनातीताश्चंद्रा अनंतकोटयः [illegible] कालस्यानादित्वात्सर्वेषां चैतेषा
माकाशसमाश्रयणं श्लेषमहिम्ना भगवच्चरणसमाश्रयत्वेनाध्यवसितं भगवच्चरणं प्रपन्नानां चेद्देहक्षयोपस्थितौ परमपदप्राप्त्या
भिमुख्यं तदानीमेव स्वसुहृद्वर्गे स्वकीयसुकृतस्तोमनिवेशनं ततः सूर्यमंडलप्राप्तिश्चेत्येतत्सर्वं श्रुतिसिद्धमिति तदनुरोधेन तेषां देहक्ष
यकालस्यामावास्यारूपस्यापि स्थितौ सूर्यमंडलप्राप्तेः प्राक्तनस्य सिद्धं पुण्यत्वेन निरूपितं स्य लावण्यस्य प्रहाणं निमित्तीकृत्य तस्य
चंद्रसादृश्यपस्वरूपोपचरिततत्सौहार्द्वति भगवन्मुखेन्यसन्मुखे क्षिप्तं १ निचयं विन्यस्य मिहिरं सूर्यं प्रतियांतीत्यन्वयः मंत्रलिंगादिति नवो राम
नवो भवति जायमान इत्यादिमंत्रसामर्थ्यादित्यर्थः मंत्रस्यमानांतरसिद्धार्थानुवादकत्वादाह इहीति श्रुतीति तत्सुकृतदुष्कृते विधूनुते तस्य प्रिया ज्ञातयः ४८

सुकृतमुपयंति अप्रिया दुष्कृतमिति कौषीतकी श्रुतिः स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छतीति स वायुमागच्छति स तत्र विजिहीते यथा रथचक्रस्य खं
तेन स ऊर्ध्व आक्रमते स आदित्यमागच्छतीति च श्रुतौ स आदित्यमागच्छतीत्यनंतरं स आगच्छति विरजां नदीं तां मनसैवात्येति तत्सुकृतदुष्कृते वि
धूनुत इति श्रुतौ शारीरकेति शरीरे भवः शारीरः स एव शारीरक आत्मा तत्प्रतिपादकेत्यर्थः अर्थवशात् प्रयोजनवशात् पूर्वपापादित्यागाभावेः र्विरा

यद्यपि सुहृद्दुहृत्वे तावदल्पपुण्यसंक्रमो भवति तथापि अत्र सुहृदित्येकवचनेन भगवन्मुखमेव चंद्रस्य सहृदूतं न मुखांतराणि चंद्रसा
दृश्यगंधस्यास्पदानीति भगवन्मुखस्येतरमुखेभ्यो व्यतिरेकोपि व्यंजितः ततश्च तस्मिन्नेव सर्वेषां स्वस्वयावल्लावण्यविन्यसनोत्प्रेक्ष
णेन प्राग्वर्णितः प्रस्तुतोर्थः स्पष्टमेव प्रतीयते यद्यपि श्रुतौ सूर्यमंडलप्राप्त्यनंतरभा[illegible]विरजानदीक्रमणानंतरमेव सुहृत्सुकृतसं
क्रमणं श्रूयते तथापि शारीरकशास्त्रे तस्यार्थवशात् प्राग्भावः स्यापि तद् इति तदनुसारेण विन्यस्य मिहिरं प्रतियांतीत्युक्तं कार्यनि
वंधनाय यथा नाथ त्वदंघ्रिनखधावनतोयलग्नास्त्वत्कांतिलेशकणिका जलधिं प्रविष्टाः ता एव तस्य मथनेन घनीभवंत्यो नूनं समुद्र
नवनीतपदं प्रपन्नाः भगवत्पादाम्बुजक्षालनरूपायां दिव्यसरित्यलक्तकरसादिवल्लग्नानां तया सह समुद्रं प्रविष्टानां तन्नखको १
तिलेशकणिकानां परिणामतया संभाव्यमाने समुद्रनवनीतपदवाच्येन चंद्रेण कार्येण तन्नखकांत्युत्कर्षः प्रतीयते १ दिमार्गप्राप्तिपू
र्वकब्रह्मप्राप्तेरसंभवेन पाठक्रमस्य आर्थक्रमेण बाधादिति भावः स्यापि न इति सांपराये तर्तव्याभावात्तथा ह्यन्य इति तार्तीयाधिकरणे सिद्धांतित
इत्यर्थः नाथेति हे नाथ विष्णो त्वच्चरणनखप्रक्षालनजले गंगारूपे लग्नाः तेषां नखानां कांतिलेशकणिकाः समुद्रं प्राप्ताः ता एव च कणिकास्तस्य जलधेर्मथनेन
सांद्रतां प्राप्ता नूनं समुद्रसंबंधिनवनीतस्य चन्द्रस्य पदं प्राप्ताः चंद्ररूपेण परिणता इत्यर्थः तया तद्द्वारेण तदित्यनंतरं हेतुरिति शेषः तद्धेतुनखकांत्युत्कर्ष इ

कु॰ नं॰ चं॰ टी॰ ४९

अस्याश्चेदिति अस्याः कामिन्यागतिसौकुमार्यं दृष्टं चेदित्यध्याहारेणान्वयः एवं संलापो भाषणं यदि श्रुतस्तदा परभृतैः कोकिलैर्वाचंयच्छतीतितथा
तस्य भावो मौनमेव व्रतं साध्यतां अकठोरता मार्दवं यदि दृश्यते तदा सा प्रसिद्धा मालती दृषत्प्रायेव पाषाणतुल्येव लक्ष्यत इति कांतिर्दृष्टा चेत्तदा कमला
लक्ष्मीः काषायं वस्त्रमालंबतामाश्रयतु किमत्र बहुनोक्तेनेत्यन्वयः गत्यादिषु गतिसौंदर्यादिषु संभाव्यमानानि उत्प्रेक्ष्यमाणानि पूर्वोदाहरणोक्तलक्षण्य
माह एतानीति कार्याणीत्यर्थः लज्जेति तिरश्चां पश्चादीनां चेतसि यदि लज्जा स्यात्तदा चमर्यः गोमृगाः पर्वतराजपुत्र्यास्तत्तथा रमणीयं केशपाशं प्र

यथावा अस्याश्चे द्गतिसौकुमार्यमधुना हंसस्य गर्वैरलं संलापो यदि धार्यतां परभृतैर्वाचंयमत्वव्रतं अंगानामकठोरता यदि दृषत्प्रायैव सा
सा मालतीकांतिश्चेत्कमला किमत्र बहुना काषायमालंबतां अत्र नायिकागतिसौकुमार्यादिषु वर्णनीयत्वेन प्रस्तुतेषु हंसादिगततद्गर्वशांत्या
दिरूपाणि औचित्येन संभाव्यमानानि कार्याणि अभिहितानि एतानि च पूर्वोदाहरण इव न वस्तुकार्याणि किंतु तन्निरीक्षणकार्याणि लज्जा
तिरश्चां यदि चेतसि स्यादसंशयं — पर्वतराजपुत्र्याः तं केशपाशं प्रसमीक्ष्य कुर्युर्बालप्रियत्वं शिथिलं चमर्य इति उदाहरणांतरे तथैवस्प
ष्टं अंगानामकठोरतेति तृतीयपादे तु वर्णनीयागसौकुमार्यातिशयनिरीक्षणकार्यत्वमपि नार्थाक्षेप्यं मालतीकठोरत्वे विवक्षितं प्रतिप
योगिविशेषापेक्षकठोरत्वस्य तदकार्यत्वात् किंतु तद्बुद्धेरेव इदमपि त्वदंगमार्दवे दृष्ट इत्याद्युदाहरणांतरे तथैव स्पष्टं ९ समीक्ष्य बालाः के

शाः प्रियायासांतास्तथा तत्त्वं शिथिलं कुर्युरित्यन्वयः तथैव निरीक्षणकार्यत्वमेव अर्थाक्षेप्येति दृषत्प्रायत्वरूपार्थाक्षिप्तेत्यर्थः इदमपि अप्रस्तुतबुद्धेः
कार्यत्वमपि अपिना प्रस्तुतबुद्धेः कारणत्वं प्रागुक्तं समुच्चीयते त्वदंगमार्दवे दृष्टे कस्य चित्तेन भासते मालतीशशभृल्लेखाकदलीनां कठोरतेति तुल्ययो राम॰
गितायां प्रागुदाहृतं ननु कार्यरूपेणाप्रस्तुतेनार्थेन यत्र प्रस्तुतं तत्कारणमवगम्यते सा कार्यनिबंधना अप्रस्तुतप्रशंसोच्यते न चोदाहृतेषु तत्संभवः। ४९

मालतीकठोरत्वादेरप्रस्तुतस्यार्थस्याकार्यतायास्त्वयैव दर्शितत्वात् एवं प्रस्तुतस्य कामिनीगतिनिष्ठसौंदर्यातिशयादेर्निरीक्षणस्यैव कारणत्वेन स्वरूपतस्त
स्याकारणत्वादित्यत आह अर्थस्येति अयमाशयः अर्थस्याप्रस्तुतत्वे सति तदंशे तद्बुद्धेरप्रस्तुतत्वात्कार्यत्वाच्च न तावदप्रस्तुतकार्यत्वांशासंभवः अर्थत्वस्य
प्रयोजनाभावेन लक्षणे अनिवेशाद्व्यावर्तकत्वाच्च नापि प्रस्तुतस्य कारणत्वांशस्यासंभवः स्वरूपतस्तस्याहेतुत्वेपि ज्ञातस्य हेतुत्वादिति ननु गतिसौंद
र्यादेर्ज्ञानमेव हेतुर्न तु ज्ञायमानं गतिसौंदर्यादि तदभावेपि ज्ञानमात्रात्कार्योत्पत्तेरित्यस्वरसादाह वस्तुतस्त्विति तदतिरेके तस्याः प्राचीनोदाहृताप्रस्तुत

अर्थस्य कार्यत्व इव तद्बुद्धेः कार्यत्वेपि कार्यनिबंधनत्वं न हीयत इति एतादृशान्यपि कार्यनिबंधनाप्रस्तुतप्रशंसायामुदाहृतानि प्राचीनैः
वस्तुतस्तु त[illegible]कोपि न दोषः नह्यप्रस्तुतप्रशंसायां प्रस्तुताप्रस्तुतयोः पंचविध एव संबंध इति नियंतुं शक्यते संबंधांतरेष्वपि तद्दर्श
नात् यथा तापत्रयौषधवरस्य तव स्मितस्य निश्वासमंदमरुता निबुसीकृतस्य एते कडंकरचया इव विप्रकीर्णा जैवातृकस्य किरणा ज
गति भ्रमंति अत्र ह्यप्रस्तुतानां चंद्रकिरणानां भगवन्मंदस्मितरूपदिव्यौषधधान्यविशेषकडंकरचयत्वोत्प्रेक्षणेन भगवन्मंदस्मितः
स्य तत्सारतारूपः कोप्युत्कर्षः प्रतीयते न च धान्यकडंकरचययोः कार्यकारणभावादिसंबंधोस्ति अतः सहोत्पत्त्यादिकमपि संबंधांतर
माश्रयणीयमेव एवमुपमानोपमेययोर्वाश्रित्य तत्र कविकल्पितकार्यकारणभावनिबंधने अप्रस्तुतप्रशंसे दर्शिते ततोन्यत्रापि दृश्यते।

प्रशंसाया अतिरेके प्रकारपंचकाधिक्ये तापेति हे हरे तव निश्वासरूपमंदमारुतेन निबुसीकृतस्य बुसरहितीकृतस्य स्मितरूपस्य आध्यात्मिकादि ता
पत्रयौषधश्रेष्ठस्य विप्रकीर्णाः कडंकरचया बुससमूहा इवैते जैवातृकस्य चंद्रस्य किरणा जगति भ्रमंतीत्यन्वयः तत्सारतारूपः किरणसारतारूपः ए
वमिति हृतसारमित्युदाहरणे चंद्रवदने उपमानोपमेयपदार्थावाश्रित्य चंद्रसारांशहरणस्य सतः कविप्रौढोक्तिकल्पितं कारणत्वं एवमन्येष्वपि द्रष्टव्यं

कालिंदीति। नर्मदायाः समुद्रस्य च संवादोयं तत्र यमुनाभ्रांत्या समुद्रेण कालिंदीत्युक्ते कोपात्साकूतं नर्मदाया उत्तरं हे कुंभोद्भव अगस्त्यमुने ब्रूहीति ततः पुनः
समुद्रस्य प्रतिवचनं अहं जलधिर्भर्ता मम शत्रोर्नामकस्माद्धेतोर्गृण्हासीति सा पुनराह नर्मदाहमित्यादि ततः समुद्रः पुनराह तर्हि कुतो मालिन्यमनुभवसी
ति सा पुनराह मिलत्कज्जलैर्मालवदेशांगनानां नेत्राश्रुभिरिति ततः किमासां जातमिति समुद्रस्य प्रश्नः कुंतलदेशाधिपः कुपित इति नर्मदाया उत्तरमिति ॥

यथा कालिंदि ब्रूहि कुंभोद्भव जलधिरहं नाम गृण्हासि कस्माच्छत्रोर्मे नर्मदाहं त्वमपि वदसि मे नाम कस्मात्सपत्न्याः मालिन्यं तर्हि कस्मादनु
भवसि मिलत्कज्जलैर्मालवीनां नेत्रांभोभिः किमासां समजनि कुपितः कुंतलक्षोणिपालः अत्र किमासां समजनीति मालवीनां तथा रोदन
स्य निमित्ते पृष्टे तत्प्रियमरणरूपनिमित्तमनाख्याय कुपितः कुंतलक्षोणिपाल इति तत्कारणमभिहितमिति कारणनिबंधना मालवान्
तिप्रस्थितेन कुंतलेश्वरेण किं तेनाश्रितानां इति पृष्टे तदवधानंतरभाविजलधिनर्मदाप्रश्नोत्तररूपं कार्यमभिहितमिति अत्रैव कार्यनिबंध
नापि पूर्वस्यां प्रश्नः शाब्दः अस्यामार्थ इति भेदः। प्रस्तुतेन प्रस्तुतस्य द्योतने प्रस्तुतांकुरः किं भृंग सत्यां मालत्यां केतक्या कंटकेद्धया
यत्र प्रस्तुतेन वर्ण्यमानेनाभिमतमन्यत्प्रस्तुतं द्योत्यते तत्र प्रस्तुतांकुरालंकारः उत्तरार्द्धमुदाहरणं इह प्रियतमेन साकमुद्याने विहरंती
काचिद्भृंगं प्रत्येवाहेति वाच्यार्थस्य प्रस्तुतत्वं ॥ ९९ इत्यलंकारचंद्रिकायामप्रस्तुतप्रशंसाप्रकरणम् ॥ ॥ प्रस्तुतेनेति प्रधानभूतप्रस्तुतां
तराभिव्यंजकं प्रस्तुतवर्णनं प्रस्तुतांकुरालंकारः प्रस्तुतस्याभिव्यंजकत्वादंकुर इवांकुर इति व्युत्पत्तेः किमिति हे भ्रमर मालत्यां विद्यमानायां कंटकेद्ध
या कंटकव्याप्तया केतक्या किं प्रयोजनमिति प्रस्तुतेन भ्रमरवृत्तांतेन मयि मनोहारिण्यां सत्यां किमुद्वेगकारिण्या परवनितयेति नायकवृत्तांतः प्राधान्येन प्र
स्तुतोऽभिव्यज्यते कथमिह भृंगवृत्तांतस्य प्रस्तुतत्वं तत्राह इहेति तथा च भृंगसंबोध्यकत्वात्तद्वृत्तांतोपि प्रस्तुत इति भावः ॥ ९९ ॥ ९९ ॥



अनामंत्रणीयामंत्रणेन संबोध्यत्वायोग्यसंबोधनेन वाच्यासंभवात् भृंगसंबोध्यकवाच्यार्थासंभवात् कस्त्वमिति शाखोटकतरुं प्रति कस्यचित्पथिक
स्य प्रश्नोक्तिः कथयामीत्याद्युत्तरं वैराग्यादिव वदसीति पुनः प्रश्नः साधु विदितमिति शाखोटकस्योत्तरं कस्मादिदं वैराग्यमिति पुनः प्रश्नः कथ्यत इ
ति पुनरुत्तरं प्रति तत्राय शाखोटक आह वामभागे नोपलक्षितोत्र वटोस्ति तं यो योजनः सर्वात्मना समितं पत्रच्छायादिभिः सेवते आश्रयति मम पुनर्मा

र्गेपि चानामंत्रणीयामंत्रणेन वाच्यासंभवादप्रस्तुतमेव वाच्यमिह स्वरूपप्रस्तुतावगतये निर्दिष्टमिति वाच्यम् मौग्ध्यादिना भृंगादावप्या
मंत्रणस्य लोके दर्शनात् यथा कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाखोटकं वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते वामे
नात्र वटस्तमध्वगजनः सर्वात्मना सेवते न च्छायापि परोपकारकरिणी मार्गस्थितस्यापि मे इत्यत्र चेतनाप्रश्नोत्तरवृत्तियोगामंत्रणस्या
त्यंतमसंभावितत्वाभावात् एवं प्रस्तुतेन वाच्यार्थेन भृंगोपालंभरूपेण वक्र्याः कुलवध्वाः सौंदर्याभिमानशालिन्याः क्रूरजनपरिह
न्तिदुःप्रधर्षायां परवनितायां विटसर्वस्वापहरणसंकल्पदुरासदायां वेश्यायां वा कंटकसंकुलकेतकीकल्पायां प्रवर्तमानं प्रियतमं प्रत्यु
पालंभो द्योत्यते यथा वा अन्यासु तावदुपमर्दसहासु भृंग लोलं विनोदय मनः सुमनोलतासु बालामजातरजसं कलिकामकाले व्यर्थं
कदर्थयसि किं नवमल्लिकायाः अत्राप्युद्यानमध्ये चरंतं भृंगं प्रत्युपालंभ इति वाच्यार्थस्यापि प्रस्तुतत्वं ९९ र्गे स्थितस्यापि न छायापि परोपका

रसंपादिकेति भूताधारत्वादिति भावः वामेनेति मार्गेति च श्लिष्टं अत्यंतं आरोपेणापि परवनितायामिति वेश्यायामिति च विषयसप्तमी तद्विषय इत्यर्थः वि
टानां सर्वस्वस्यापहरणे यः संकल्पस्तेन दुःप्रापेति वेश्याविशेषणं अन्येति हे भृंग अन्यासूपमर्दक्षमासु सुमनसां पुष्पाणां लतासु तावत् यावत् नवम
ल्लिकायाः कलिका संजातरजस्का भवति लोलं चपलं मनो विनोदय लोलमिति क्रियाविशेषणं वा नवमल्लिकाया लताविशेषस्य बालामभिनवां असं

जातरजस्कांकलिकामकालेव्यर्थेकिमितिकदर्थयसिपीडयसीत्यन्वयः रजः पुष्परजः स्त्रीणांरेतश्च शृण्वतीति एतद्वचनंशृण्वतिसतीत्यर्थः कोशेति इयंनलिनीकमलिनीकोशद्वंद्वंमुकुलयुगलंकांदंबस्य हंसस्यच चाक्षतंक्षतक्षतंदधातिधत्ते तथेयंचूतस्याम्रस्यलतानूतनंपल्लवंपुंरूपैः कोकिलैरास्वादितंचर्वितंधत्ते इतिदीर्घिकायावाप्यास्तटेमिथःपरस्परंसखीजनस्यवचआकर्ण्यसाप्रस्तुतानायिकाकमलमुकुलाम्रपल्लवव्याजेनैता

इदंचप्रौढांगनासुसतीषुबालिकांरतयेक्लेशयतिकामिनिशृण्वतिकस्याश्चिद्विदग्धायावचनमितितंप्रत्युपालंभोद्योत्यते यथावा कोशद्वंद्वमियंदधातिनलिनीकादंबचंचूक्षतंधत्तेचूतलतानवंकिसलयंपुंस्कोकिलास्वादितं इत्याकर्ण्यमिथःसखीजनवचःसादीर्घिकायास्तटेचैलांतेनतिरोदधेस्तनतटंबिंबाधरंपाणिना अत्रेयमितिनलिनीव्यक्तिविशेषनिर्देशेनदीर्घिकायास्तटइत्यनेनचवाच्यार्थस्यप्रस्तुतत्वंस्पष्टं प्रस्तुतांतरद्योतनंचोतगाढंस्वयमेवकविनाविष्कृतं अत्राद्योदाहरणयोरन्यापदेशध्वनिमाह लोचनकारः। अप्रस्तुतप्रशंसायांवाच्यार्थोऽप्रस्तुतत्वाद्वर्णनीयइतितत्राभिधायामपर्यवसितायांतेनप्रस्तुतार्थव्यक्तिरलंकारः इहतुवाच्यस्यप्रस्तुतत्वेनतत्राभिधायांपर्यवसितायामर्थसौंदर्यबलेनाभिमतार्थव्यक्तिर्ध्वनिरेवेति वस्तुतस्त्वयमप्यलंकारएवनध्वनिरितिव्यवस्थापितंचित्रमीमांसायांतृतीयोदाहरणस्यत्वलंकारत्वेकस्यापिनविवादः उक्तंहिध्वनिकृता शब्दार्थशक्त्याक्षिप्तोपिव्यंग्यार्थः कविनापुनः यत्राविष्क्रियतेस्वोक्त्यासान्यैवालंकृतिर्ध्वनेरिति एतान्यपिसारूप्यनिबंधनान्युदाहरणानि ॥ मदीयस्तनाधरक्षतगुप्त्यांतंकथयंतीतिज्ञात्वाचैलस्यवस्त्रस्यांतेनप्रांतेनस्तनतटंतिरोदधेबिंबरूपमधरंचपाणिनातिरोदधे आच्छादितवतीत्यन्वयः अन्यापदेशेति अन्यस्यापदेशोमिषंयत्रतादृशमित्यर्थः तदीयमेवग्रंथंदर्शयति अप्रस्तुतेत्यादि व्यवस्थापितमिति प्रस्तुतत्वेपिमुख्यतयातात्पर्याभावादत्राप्यभिधापर्यवसानाभावादितिभा

प्रस्तुतत्वलंभनेनप्रस्तुतत्वप्राप्त्या रात्रिरिति हेविलोचनेशिवाकल्याणरूपाकाचनअनिर्वचनीयप्रभावारात्रिः शिवरात्रिरित्यर्थः संनिधत्तेसंनिहिताभवति अतः युवांअप्रमत्तेजाग्रतंजाग्रद्रूपेभवतं कुतस्तत्राह युवयोः सकाशेसमीपेअचिरेणसमानधर्मासदृशः सखाकश्चिद्भविष्यतितत्तृतीयंलोचनंभालेभविष्यतीत्यर्थः तदेकदेशतयेति शिवरात्रिमाहात्म्यप्रयुक्तत्वेहेतुः तच्चवर्ण्यतेतद्वाच्यं उदाहृतकाव्यवाच्यं एवंचैकदेशैकदेशभावसंबंधनिबंधनत्वमत्रदर्शितं वहंतीति भगवत्याःसीमंतवर्णनमिदं अयिशिवेतवसीमंतसरणिः नःक्षेमंतनोत्वित्यन्वयः कीदृशी सिंदूरंवहंती किमिव

संबंधान्तरनिबंधनान्यपिकथंचिद्वाच्यव्यंग्ययोःप्रस्तुतत्वनिबंधनेनोदाहरणीयानि दिङ्मात्रमुदाह्रियते रात्रिःशिवाकाचनसन्निधत्तेविलोचनेजाग्रतमप्रमत्ते समानधर्मायुवयोःसकाशेसखाभविष्यत्यचिरेणकश्चित् अत्रशिवसारूप्यमिवतदेकदेशतयातद्वाच्यंललाटलोचनमपिशिवरात्रिमाहात्म्यप्रयुक्तत्वेनवर्णनीयमितितन्मुखेनकृतंनशिवसारूप्यंगम्यं यथावा वहंतीसिंदूरांप्रबलकबरीभारतिमिरत्विषांवृंदैर्वंदीकृतमिवनवीनार्ककिरणं तनोतुक्षेमंनस्तववदनसौंदर्यलहरीपरीवाहस्रोतःसरणिरिवसीमंतसरणिः अत्रवर्णनीयत्वेनप्रस्तुतायाःसीमंतसरणेर्वदनसौंदर्यपरीवाहत्वोत्प्रेक्षणेनपरिपूर्णतटाकवत्परीवाहकारणीभूतास्वस्थानेअमांतीवदनसौंदर्यसमृद्धिःप्रतीयते सापिवर्णनीयत्वेनप्रस्तुतैव यथावा अंगासंगिमृणालकांडमयतेभृंगावलीनांरुचंनासामौक्तिकमिंद्रनीलसरणिंश्वासानिलाज्जाह्नते ॥ प्रबलानांकेशपाशरूपांधकारदीप्तीनांसमूहैर्वंदीकृतंबालार्ककिरणमिवसरणिःकेवलंवदनसौंदर्यलहरीणांपरीवाहरूपास्रोतसःसरणिरिवेति परीवाहोजलनिर्गममार्गःजलोच्छ्वासाःपरीवाहाइत्यमरः अंगेति विरहसंतापवर्णनं अंगसंबद्धंमृणालकांडंभृंगेभ्योविशेषरहितांतत्समांरुचंकांतिमयतेप्राप्नोति तापातिशयेनमलिनीभावान् नासामौक्तिकंश्वासानिलाद्दत्युष्णाद्धेतोरिंद्रनीलमणेःपदवीं

कु·नं·
चं·टी·
५२

तथाकुचयोर्दत्तानिहितेयंहिमवालुकाकर्पूरंक्षणंदीपरूपतांधत्ते एवंकरतलेधारारूपेणसिक्तंजलंतत्प्रायः पिंडपतितजलवत्संलीयते तापातिश
यात् शोषंप्राप्नोतीत्यर्थः उदाहरणद्वयेपिकार्यनिबंधनत्वंव्यक्तं नतत्रापमिति द्वयोरपिवाच्यत्वादितिभावः अयमित्युपलक्षणं अप्रस्तुतप्रशंसापि
नितिबोध्यम् किंकृतस्तर्हि तत्रचमत्कारः तआह किंत्विति परीति रत्नावल्यांस्वविरहातुरायाः सागरिकायाः शयनमुपगतस्यराज्ञइयमुक्तिः इ
दंबिसिनीपत्ररचितंशयनंकृशांग्याः संतापंवदत्यनुमापयति किंभूतं पीनस्तनजघनसंगादुभयतऊर्ध्वाधोभागयोः परिम्लानं तनोःकृशस्य

दत्तेयंहिमवालुकापिकुचयोर्धत्तेक्षणंदीपतांतत्प्रायः पतितांबुवत्करतलेधारांबुसंलीयते अत्रनायिकायाविरहासहत्वातिशयप्रक
टनायसंतापवत्कार्याणिमृणालमालिन्यादीन्यपिवर्णनीयत्वेनविवक्षितानीतितन्मुखेनसंतापोवगम्यः यत्रकार्यमुखेनकारण
स्यावगतिरपिश्लोकेनिबद्धाननत्रायमलंकारःकिंत्वनुमानमेव यथा परिम्लानंपीनस्तनजघनसंगादुभयतस्तनोर्मध्यस्यांतः प
रिमिलनमप्राप्यहरितं इदंव्यस्तन्यासंप्रशिथिलभुजाक्षेपवलनैःकृशांग्याः संतापंवदतिनलिनीपत्रशयनं पर्यायोक्तंतुगम्यस्यवचो
भंग्यंतराश्रयं नमस्तस्मैकृतोयेनमुधाराहुवधूकुचौ यदेवगम्यंविवक्षितंतस्यैवभंग्यंतरेणविवक्षितरूपादपिचारुतरेणकेनचि
द्रूपांतरेणाभिधानंपर्यायोक्तम् ॥ मध्यस्यपरिमिलनंसंघर्षमप्राप्यअंतर्मध्यभागेहरितवर्णं एवंप्रकर्षेण शिथिलयोर्भुजयोराक्षेपैर्वलनैश्च
व्यस्तः विषमीकृतोन्यासोरचनायस्यतादृशमिति इत्यलंकारचंद्रिकायांप्रस्तुतांकुरप्रकरणम् ननुप्रस्तुतकार्याभिधानमुखेनकारणस्यगम्यत्वमपिप्र
स्तुतांकुरविषयश्चेत्किंतर्हि पर्यायोक्तमित्याकांक्षायामाह पर्यायोक्तमिति वचःप्रतिपादनंभंग्यंतराश्रयम् भंग्यंतरप्रकारकं लक्षणंपरिष्कुरुते यदे
वेति तथाचविवक्षितस्वप्रकारातिरिक्तेनचारुतरेणरूपेणव्यंग्यस्याभिधानंपर्यायोक्तमितिलक्षणं पर्यायेणभंग्यंतरेणोक्तमभिहितंव्यंग्यंयत्रेतिव्यु

इत्यलंकारचंद्रिकायांव्याजस्तुतिप्रकरणम् व्याजनिंदांलक्षयति निंदायाइति यत्रान्यनिंदयाऽन्यस्यनिंदायाअभिव्यक्तिः पर्यवस्यतिसाव्याजनिंदा इतर
निंदाव्याजेननिंदेतिव्युत्पत्तेः विधेइति हेविधेब्रह्मन् प्राक्पूर्वंतेतवैकमेवशिरोयःअहरत् अछिनत् सएवार्थात्हरोनिंद्यइत्यन्वयः निंद्येत्यभिव्यंग्येत्यनेनान्वितं निंद
याभिव्यंग्याविधेर्निंदाव्याजनिंदेत्यन्वयः विषमविपाकं दारुणपरिणामं विधिरेवेति विशेषतो गर्हणीयः निंदनीयः हेकरटकाकत्वंरटरटनंकुरु यो
विधिः आम्रवृक्षेसरलेनसौम्येनकोकिलेनसहवासंतवचकारेत्यन्वयः ननुकेनाप्यालंकारिकेणानुक्तायाव्याजनिंदायाः कथमलंकारत्वेनांगीकार

अत्रशुकशावकस्तुत्यानायिकाधरसौभाग्यातिशयस्तुतिर्व्यज्यते। निंदापानिंदयाव्यक्तिर्व्याजनिंदेतिगीयते विधेसनिंद्योयस्तेप्रागेक
मेवाहरच्छिरः अत्रहरनिंदयाविषमविपाकंसंसारप्रवर्त्तयतोविधेरभिव्यंग्यानिंदाव्याजनिंदा यथावा विधिरेवविशेषगर्हणीयः
करटत्वंरटकस्तवापराधः सहकारतरौचकारयस्तेसहवाससरलेनकोकिलेन अन्यस्तुत्यान्यस्तुत्यभिव्यक्तिरितिपंचमप्रकार
व्याजस्तुतिप्रतिबंदीभूतेयंव्याजनिंदा ननुयत्रान्यस्तुत्यान्यस्तुतेरन्यनिंदयान्यनिंदायाश्चप्रतीतिः तत्रव्याजस्तुतिव्याजनिंदा
लंकारयोरभ्युपगमेस्तुतिनिंदारूपाप्रस्तुतप्रशंसोदाहरणेष्वप्रस्तुतप्रशंसानवकाशा तेषामपिव्याजस्तुतिव्याजनिंदाभ्याक्रोडी
कारसंभवादितिचेदुच्यते यत्राप्रस्तुतवृत्तांतात्स्तुतिनिंदारूपात्तत्स्वरूपः प्रस्तुतवृत्तांतःप्रतीयते अंतःछिद्राणिभूयांसीत्यादौ
तत्रलब्धावकाशासारूप्यनिबंधनाप्रस्तुतप्रशंसा ॥ णमित्याशंक्याह प्रतिबंदीति तुल्ययुक्त्याप्रतिबंदीस्थानीयेत्यर्थः तथाचस्तुतिनिंदायाम
प्रस्तुतप्रशंसातोवैचित्र्यविशेषात्तदनंतर्भावेव्याजस्तुतौचार्थानुगमाभावादनंतर्भावेपृथगलंकारतायाऔचित्यापातत्वात्प्राचीनैरनुक्तापिस्वीकर्तुमुचि
तेत्याशयः प्रागुक्तयोरेकः कृतीशकुंतेछित्याबद्धरुचिमित्यनयोरप्रस्तुतप्रशंसोदाहरणत्वासंगतिमाशंकतेनन्विति क्रोडीकारः स्वविषयीकरणं अन्यत्रलब्धात्मकस्या

॥ ...स्य इतव्युत्पादितमित्यग्रेतनेनान्वयः कल्हारं जलपुष्पविशेषः तत्संबंधिनः काल्हाराः सुखयंतीति सुखाश्च ते शीतलाश्चेत्यर्थः अप्रकांडे अप्रस्तु
...थाचाप्रस्तुताचासौप्रशंसाचेति व्युत्पत्तिरिति भावः नपरसेविनोः परसेविनः प्रशस्यते स्तूयते मतद्वयेप्यस्वरसबीजं दर्शयति वस्तुतस्त्विति अभिव्य
क्तिरिति योः प्रस्तुतप्रशंसा तो वैचित्र्यस्य विषय आलंबनभूतो विशेष इत्यन्वयः अन्यथा तनो वैचित्र्येपि तदंतर्भावांगीकारे एवंचेति अन्यगतस्तुतिनिं

अयमप्रस्तुतप्रशंसाविषय इति अलंकारसर्वस्वकारः तेन हि सारूप्यनिबंधनाप्रस्तुतप्रशंसोदाहरणांतरं वैधर्म्येणापि दृश्यते यथा ध
न्याः खल्वु वने वाताः काल्हाराः सुखशीतलाः राममिंदीवरश्यामं ये स्पृशंत्यनिवारिताः। अत्र वाता धन्या इति अप्रस्तुतार्थाद् हमधन्य इति
वैधर्म्येण प्रस्तुतोर्थः प्रतीयत इति व्युत्पादितं इयमेवाप्रस्तुतप्रशंसा न कार्यकारणनिबंधनेति दंडी यदाह अप्रस्तुतप्रशंसा स्याद् प्रकां
डे तु पास्तुतिः सुखं जीवंति हरिणा वनेष्वपरसेविनः अर्थैरयत्नसुलभैर्जलदर्भांकुरादिभिः सेयमप्रस्तुतैवात्र मृगवृत्तिः प्रशस्यते रा
जानुवर्तनक्लेशनिर्विण्णेन मनस्विनेति वस्तुतस्त्वत्र व्याजस्तुतिरित्येव युक्ते स्तुत्या निंदाभिव्यक्तिरित्यप्रस्तुतप्रशंसातो वैचित्र्यविशे
षसद्भावात् अन्यथा प्रसिद्धव्याजस्तुत्युदाहरणेष्वप्यप्रस्तुताभ्यां निंदास्तुतिभ्यां प्रस्तुते स्तुतिनिंदे गम्येते इत्येतावता व्याजस्तुतिमात्रम
प्रस्तुतप्रशंसा स्यात् एवं चानया प्रक्रियया यत्रान्यगतस्तुतिनिंदे विवक्षया न्यस्तुतिः क्रियते तत्रापि व्याजस्तुतिरेव अन्यस्तुतिव्याजेन
तदन्यस्तुतिरित्यर्थानुगमसद्भावात् यथा शिखरिणि क नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः तरुणि येन तवाधरपाटल
दशति बिम्बफलं शुकशावकः

१ द्वाभ्यामन्यगतनिंदास्तुत्यभिव्यक्त्योर्व्याजस्तुतित्वसिद्धौ चेत्यर्थः प्रक्रियया प्रकारेण शिखरिणीति नायिकां मतिना
स्योक्तिः हे तरुणि असौ शुकबालकः नाम वितर्के क नु कस्मिन् शिखरिणि पर्वते कियत्कालं चिरं किमभिधानं किं नामकं तपः अकरोद्येन हेतुना तवाध
स्तुता...
वेति तथा

...सिकोऽर्थः कामनाविषय
...ष्यादीति विद्वत्तादीत्यर्थः आदिना तपःशीलादिपरिग्रहः दारिद्र्यादीत्यादिपदेन कुटुंबबाहुल्यादिपरिग्रहः न चात्र राजवर्णनप्रस्ता... ...वालीलमात्रेण त
...मितिवाच्यं स्तुतिपर्यवसानविवक्षायां स्वकीयभिक्षाटनोद्घाटनस्यासंगतत्वेन स्तुते रुक्त निंदारूपोपालंभपर्यवसानस्यानुभवसिद्धत्वा... ...दासीनस्य
त्वमिति अंगदं प्रति कस्यचिद्राक्षसस्य प्रश्नः रामरूपस्य राज्ञो भवने लेखार्थस्य संदेशस्य वाहकोस्मीत्युत्तरं पुरा पूर्वमागतः निर्दग्धलंकापुरः सो...

अत्राद्योदाहरणे सप्तसप्तिपदगतश्लेषमूलनिंदाव्याजेन स्तुतिर्व्यज्यते द्वितीयोदाहरणे सर्वतः सर्वेश्वरोसीति राज्ञः स्तुत्या व्याजरूपया
मदीयवैदुष्यादि दारिद्र्यादि सर्वं जानन्नपि बहुप्रदानेन रक्षितुं शक्तोपि मह्यं किमपि न ददासीति निंदा व्यज्यते सर्वमिदं निंदास्तुत्योरे
कविषयत्वे उदाहरणं भिन्नविषयत्वे निंदया स्तुत्याभिव्यक्तिर्यथा कस्त्वं वानर रामराजभवने लेखार्थसंवाहको यातः कुत्र पुरागतः स
हनुमान्निर्दग्धलंकापुरः बद्धो राक्षससूनुनेति कपिभिः संताडितस्तर्जितः सव्रीडात्तपराभवो वनमृगः कुत्रेति न ज्ञायते अत्र हनुमन्निं
दया इतरवानरस्तुत्यभिव्यक्तिः स्तुत्या निंदाभिव्यक्तिर्यथा यद्वक्त्रं मुहुरीक्षसे न धनिनां ब्रूषे न चाटून्मृषा नैषां गर्ववचः शृणोषि न च
तान्प्रत्याशया धावसि काले बालतृणानि खादसि परं निद्रासि निद्रागमे तन्मे ब्रूहि कुरंग कुत्र भवता किं नाम तप्तं तपः अत्र हरिणस्तुत्या रा
जसेवानिर्विण्णस्यात्मनो निंदाऽभिव्यज्यते

१ न कुत्र यात इति पुनः पूर्वस्य प्रश्नः बद्ध इत्याद्युत्तरार्द्धमंगदस्योत्तरं राक्षसस्य रावणस्य सूनुना बद्ध
इति हेतोः कपिभिर्वानरैः सम्यक् ताडितस्तर्जितः स वनमृगः हनुमान् व्रीडया लज्जया आत्तः प्राप्तः पराभवो येन तादृशः कुत्र यात इति न ज्ञायत इत्यन्वयः
...रिति हे कुरंग यद्यस्माद्धनिनां मुखं मुहुर्मुहुर्वारंवारं नेक्षसे न पश्यसि मृषा मिथ्या चाटून्प्रियशब्दान्न वदसि यदिति सर्वत्र संबध्यते एषां धनिनां गर्वयु
क्त्याश... ...ष्णोषि तान्धनिकान्प्रति आशया धनाशया न धावसि परं केवलं कालेषु घासमये खादसि भक्षयसि निद्राया आगमे च निद्रां प्राप्नोषि तत्तस्मात्तु

तथा च निंदया स्तुतेः स्तुत्या च निंदायाः स्तुत्यास्तुतेभ्यो क्तिरभिव्यक्तिर्व्याजस्तुतिरित्यर्थः प्रथमे व्याजेन स्तुतिरिति चरमयो र्व्याजरूपा स्तुतिरिति च व्यु त्पत्तेः अत एव व्याजस्तुतिपदार्थानुगमानांभावान्निंदया निंदाभिव्यक्ति र्व्याजनिंदाख्यमलंकारांतरमित्यग्रे वक्ष्यते एवमाद्ये प्रकारद्वये स्तुतिनिंद योः समानविषयत्वभिन्नविषयत्वाभ्यां प्रत्येकं द्वैविध्यमिति चत्वारो भेदाः अंत्ये तु भिन्नविषयस्तुतिकएकएवेति पंच भेदाः लक्षणं तु व्याजनिंदाभि न्नत्वे सति स्तुतिनिंदान्यतरपर्यवसायि स्तुतिनिंदान्यतरत्वं सर्वानुगतं बोध्यम् कस्त्वइति नृपं प्रति कवेरुक्तिः त्वयि योद्धुमेकं सप्तिमश्वमास्थिते आरू

कः स्वर्धुनि विवेकस्ते पापिनो नयसे दिवं साधु दूति पुनः साधु कर्तव्यं किमतः परं यन्मदर्थे विलूनासि दंतैरपि नखैरपि निंदायाः स्तुतेः स्तु त्यादिनिन्दाया वा अवगमनं व्याजस्तुतिः कः स्वर्धुनीत्युदाहरणे विवेको नास्तीति निंदाव्याजेन गंगा सुकृति वदेव महापातकादिकृतवतो पि स्वर्गं नयतीति व्याजरूपया निंदया तत्प्रभावातिशयस्तुतिः। साधु दूतीत्युदाहरणे मदर्थं महांतं क्लेशमनुभूतवत्यसीति व्याजरूपया स्तुत्या मदर्थं न गतासि किं तु रंतुमेव गतासि धिक् त्वां दूतिकाधर्मविरुद्धकारिणीमिति निंदावगम्यते यथा वा कस्ते शौर्यमदो योद्धुं त्वय्येकं स सिमास्थिते सप्तसप्तिसमारूढा भवंति परिपंथिनः अर्हं दानववैरिणा गिरिजयाप्यर्धं शिवस्याहृतं देवेत्थं जगतीतले स्मरहराभावे समु न्मीलति गंगा सागरमंबरं शशिकला नागाधिपः क्ष्मातलं सर्वज्ञत्वमधीश्वरत्वमगमत्त्वां मां च भिक्षाटनम् १ द्वे सति परिपंथिनः शत्रवः स प्तसमारूढा भवंतीत्यन्वयः सप्त सप्तयोऽश्वा अस्येति सूर्यः सप्त च ते सप्तयः अश्वास्तत्समारूढा इति द्वितीयोर्थो निंदाद्योतकः त्वया संमुखाहतानां इ लं भित्त्वा दिवमुपगता इति स्तुतौ पर्यवसानं अर्हमिति शिवस्य देहार्धं दानवानां वैरिणा हरिणा आहृतं हरिहरात्मकस्यैकस्य विग्रहस्य सुना तवाध रिजयाप्यवशिष्टार्धमाहृतं हे देवराजन् इत्थमुक्तप्रकारेण जगतीतले स्मरहरस्याभावे समुन्मीलति प्रकाशमाने सति गंगा सागरं

एतच्च दृत्याल ... सिकोऽर्थः कामनाविषय ... भंगेन प्राचीनलक्षणव्याख्यानमयुक्तमि ... वालीलामात्रेण त लंकाराणामियत्तानियमाभावेन प्रस्तुतांकुरस्याप्यलंकारान्तरत्वादेवंविधशब्दस्वारस्यभंगेन प्राचीनलक्षणव्याख्यानमयुक्तम् ... उदासीनस्या तमपि पर्यायोक्तविषयं विशदयति प्रस्तुतेनेत्यादिना यत्तु भगवद्रूपेणावगमनं विशेषणमर्यादालभ्यत्वेनासुंदरं पर्यायोक्तस्य विषय इत्युदासीनस्या तिरमणीयम् नहि पर्यायोक्ते व्यंग्यसौंदर्यकृतो विच्छित्तिविशेषः किं तु भंग्यंतराभिधानकृत एव व्यंग्यं तु भंग्यंतराभिधानतोऽसुंदरमेव प्रायशो रेतरमणीयम् नहि पर्यायोक्ते व्यंग्यसौंदर्यकृतो विच्छित्तिविशेषः किं तु भंग्यंतराभिधानकृत एव व्यंग्यं तु भंग्यंतराभिधानतोऽसुंदरमेव अलंकारसर्व स्वादावंतस्तदसुंदरत्वोद्भावनमकिंचित्करमेव अलंकारसर्व यथा द्रष्टव्यमिति विवक्षिते व्यंग्येऽयं देशोऽलंकरणीयः सफलतामुपनेतव्य इत्यादावतस्तदसुंदरत्वोद्भावनमकिंचित्करमेव अलंकारसर्व पथाद्द्रष्टव्यमिति विवक्षिते व्यंग्ये अयं देशोऽलंकरणीयः सफलतामुपनेतव्य इत्यादावतस्तदसुंदरत्वोद्भावनमकिंचित्करमेव

प्रस्तुतेन च राहोः शिरोमात्रावशेषेणालिंगनवंध्यत्वाद्युपादानरूपे वाच्ये भगवतोऽप्यंतरे उपपादिते तेन भगवतः स्वरूपेणावगमनं प्रस्तुतेन च राहोः शिरोमात्रावशेषेणालिंगनवंध्यत्वाद्युपादानरूपे वाच्ये भगवतो रूपांतरे उपपादिते तेन भगवतः स्वरूपेणावगमनं

प्रस्तुतेन च राहोः शिरोमात्रावशेषेणालिंगनवंध्यत्वाद्यापादानरूपे वाच्ये भगवतो रूपांतरे उपपादिते तेन भगवतः स्वरूपेणावगमनं प्रस्तुतेन च राहोः शिरोमात्रावशेषेणालिंगनवंध्यत्वाद्यापादानरूपे वाच्ये भगवतो रूपांतरे उपपादिते तेन भगवतः स्वरूपेणावगमनं

गम्यस्य राहुशिरश्छेदस्य भंग्यंतरेणानभिधानादव्याप्तिमाशंक्येत्यर्थः अभिधानायोगादिति अयमाशयः अत्र हि राहुशिरश्छेदकारीति वासुदेव इति वा व्यंग्यं
राहुवधूजनसंबंधितादृशरतोत्सवकारित्वेन प्रकारांतरेणाभिधीयत इति न वक्तुं शक्यं धर्मिणो वासुदेवस्य प्रक्रांतत्वेन यच्छब्दाभिहितत्वेन च व्यंग्यत्वायो
गात् व्यंग्यस्य च राहुशिरश्छेदकारित्वस्य वासुदेवत्वस्य वा धर्मस्य प्रकारांतरेणानभिधानात् तस्मात्पर्यायेण कार्यादिद्वारेणोक्तं गम्यमाक्षिप्तं वेति लक्ष
णायेइति अभिधाने आक्षेपो व्यंजनं वा पर्यायोक्तमिति क्वचित्पर्यायोक्त इति पाठस्त्वयुक्तः व्यंग्येनोपलक्षितमुक्तमिति व्याख्यानग्रंथविरोधात् नवि

यद्गम्यं तस्यैवाभिधानायोगात्कार्यादिद्वारेणैवाभिधानं लक्षणे विवक्षितमिति लक्षणं क्लिष्टगत्या योजितं लोचनकृता पर्यायोक्तंय
दन्येन प्रकारेणाभिधीयत इतीदमेव लक्षणमंगीकृत्य तदुदाहरणे चकार्येण शब्दाभिहितेन कारणं व्यंग्यं प्रदर्श्य तत्र लक्षणं लक्ष्य
नामच क्लिष्टगत्या योजितं वाच्यादन्येन प्रकारेण व्यंग्येनोपलक्षितं सद्यदभिधीयते तत्पर्यायेण प्रकारांतरेण व्यंग्येनोपलक्षितं त
मुक्तमिति सर्वोयं क्लेशः किमर्थ इति न विद्मः प्रदर्शितानि हि गम्यस्यैव रूपांतरेणाभिधाने बहून्युदाहरणानि चक्राभिघातप्रसभा
ज्ञयैवेति प्राचीनोदाहरणमपि स्वरूपेण गम्यस्य भगवतो रूपांतरेणाभिधानसत्वात्तद्योजनमेव यत्तु तत्र राहुशिरश्छेदादव गमनं
तत्र प्राशुक्तरीत्या प्रसक्तता कुत एव ११ यद्दिति यच्छब्दाभिहितस्यापि भगवतो वासुदेवत्वादिना रूपांतरेण व्यंग्यतया यथाश्रुते बाधकाभावादि
भावः नचाभिधाविषये कथं व्यंजनेति वाच्यं वासुदेवत्वादिना प्रतीयमाने भगवत्यभिधाविषयत्वासंभवात् तस्याः स्वावच्छेदकधर्मेणैव बोधक
अत एवोक्तं शक्यादन्येन रूपेण ज्ञाते भवति लक्षणेति इह तु लक्षणाहेत्वभावाद्व्यंजनोपगम्य इति ननु प्रस्तुतेन तादृशरतोत्सवरूपे
तस्यैव राहुशिरश्छेदरूपकारणस्य प्रतीतौ च मत्कृतिविशेषस्तस्या अलंकारत्वं गमयति तच्चालोच्यमानमप्रस्तुतप्रशंसायाअर्हेतुना तवाध
वेति त

रागाग्रेसरप्रेशाग्रनःसरपुरःसरा इत्यमरः एवमधुरं भुवनं पातालं भूषणपेटिका सर्पभूषणत्वात् पुष्करमाकाशं पुष्पवाटि सा चेतसि कोऽर्थः कामनाविषय
आधारत्वात् शतमखइंद्रस्तत्प्रमुखा अग्न्यादयः दिक्पालाः शाटीपालनाधिकृताः दिगंबरत्वेन दिशामेव शाटीरूपत्वात् अनंतद्भावेपि वालीलमात्रेण त
यानीयभस्मसंबंधित्वात् मदनभस्मना शिवेनांगानामनुलेपनस्य पुराणेषु प्रसिद्धेः अत्र लक्षणं संगमयति अत्रेति व्यवस्थिता द्वारिणो जनस्य उदासीनस्य
वगम्याः व्यंग्याः विनेयत्वेति शिक्षणीयत्वेत्यर्थः आदिना पातालगुप्तत्वादिपरिग्रहः। अभिहिता इति वाहाद्यधिकृतत्वादिना व्यासादि कामंते

भूषापेटी भुवनमधुरं पुष्करं पुष्पवाटी शाटीपालाः शतमखमुखाश्चंद्रन दुर्मनोभूः अत्र यस्य वेदा वाहा भुजंगमा भूषणानीत्यादितद्व
क्यार्थव्यवस्थितो वेदत्वाद्याकारेण गम्या एव वेदादयो व्यासप्रमुखविनेयत्वाद्याकारेणाभिहिताः परं तु देवता सार्वभौमत्वस्फुटीकर
णाय विशेषणविशेष्यभावव्यत्यासेन प्रतिपादिताः अत्रालंकारसर्वस्वकृतापि पर्यायोक्तस्य संप्रदायागतमिदमेव लक्षणमंगीकृते
गम्यस्यापि भंग्यंतरेणाभिधानं पर्यायोक्तमिति चक्राभिघातप्रसभाज्ञयैव चकार यो राहुवधूजनस्य आलिंगनोद्दामविलासवंध्यरतो
त्सवं चुंबनमात्रशेषमिति प्राचीनं तदुदाहरणं त्वन्यथा योजितं राहुवधूगतेन विशिष्टेन रतोत्सवेन राहुशिरश्छेदः कारणरूपो गम्यत
इति एवं च गम्यस्यैवाभिधानमिति लक्षणस्यानुपपत्तिमाशंक्याह ११ समानवित्तिवेद्यत्वेन व्यासादिविनेयत्वादेरपि तेषु गमादिति भावः सा
देवव्यासादिविनेयत्वाद्याकारेण किमिति न निर्दिष्टा इत्याशंक्याह परं त्विति यद्यप्युक्तविशेष्यविशेषणभावेपि देवतासार्वभौमत्वमवगम्यते तथापि स्फु
प्रतिपत्त्यर्थे तद्विपरीत्यं कृतमित्यर्थः चक्रेति यो देवः सुदर्शनचक्रस्याभिघातेया प्रसभं आज्ञा तयैव राहुवधूजनस्य सुरतोत्सवं आलिंगनस्य उद्दामाउ
द्दाये विलासास्तैर्विध्यं रहितं चुंबनमात्रावशेषं चकारेत्यन्वयः विशिष्टेन उक्तविशेषणविशिष्टेन एवं च ईदृशोदाहरणयोजने च अनुपपत्तिमिति ॥ ॥

त

(रू)स्पणेस्वपदंव्यंग्यपरं नचव्यंग्यस्यैववाच्यत्वंनिष्फलंविरुद्धंचेतिवाच्यं प्रकारभेदात् तदुक्तं यदेवोच्यतेतदेवव्यंग्यंयथातुव्यंग्यंनतथोच्यतइति
(प्र)कारांतरेणेतिविशेषणात् नमोराहुशिरश्छेदकारिणेदुःखहारिणेइत्यत्रनपर्यायोक्तप्रसंगः स्वासाधारणरूपेणवासुदेवत्वेन यत्तुराहुशिरश्छेदकारित्व
रूपव्यंग्यमादायैवपर्यायोक्तंवक्तुमर्हंनतुविशेषणसामर्थ्यलभ्यं वासुदेवत्वमादायेति तदयुक्तं राहुशिरश्छेदकारित्वस्यवाच्यसिद्ध्यंगत्वेनतेना
पिविवक्षितंव्यंग्यंप्रधानभूतंवासुदेवत्वंतदादायैवतत्कथनौचित्यात् राहुस्त्रीकुचनैष्फल्यकारिणे हरयेनमइत्यत्रतुराहुशिरश्छेदकारित्वमेव

उत्तरार्द्धमुदाहरणं अत्रभगवान्वासुदेवःस्वासाधारणरूपेणगम्यः राहुवधूकुचवैयर्थ्यकारकत्वेनरूपांतरेणसएवाभिहितः लो
कंपश्यतियस्यांघ्रिःसयस्यांघ्रिनपश्यति ताभ्यामप्यपरिच्छेद्याविद्याविश्वगुरोस्तव अत्रगोतमःपतंजलिश्चस्वासाधारणरूपा
भ्यांगम्यौरूपांतराभ्याममभिहितौ यथावा निवेद्यतांहंतसमापयंतौशिरीषकोमलम्रदिमाभिमानं पादौकियद्दूरमिमौप्रयासेनिधि
त्सतेतुच्छदयंमनस्ते अत्रकिंदूरंजिगमिषेतिगम्यएवार्थोरूपांतरेणाभिहितः यथावा देवंवंदेजलधिशरधिंदैवतासार्वभौमंव्या
सप्रष्ठाभुवनविदितायस्यवाहाधिवाहाः १ विवक्षितंव्यंग्यमितियुक्तंतदादायपर्यायोक्तमितिविभावनीयं लोकमिति यस्याक्षपादस्यांघ्रि
(र्लो)कंपश्यति अथचसःलोकःयस्यपतंजलेःशेषावतारस्यांघ्रिनपश्यतिउरगत्वात् ताभ्यांअक्षपादपतंजलिभ्यां अपरिछेद्या अनाकलनी[illegible]वादि
(नि)वेद्यतामिति नत्वंप्रतिदमयंत्याउक्तिः तवअल्पदयंमनःकर्तृशिरीषकलिकामृदुत्वाभिमानमपनयंतौइमौपादौ कियद्दूरपर्यंतंप्रया[illegible]णववोध[illegible]
(इ)ति हंतखेदे एतन्निवेद्यतांकथ्यतामित्यर्थः देवमिति देवतासार्वभौमसकलदेवताःधीश्वरंदेवंवंदे कीदृशंजलधिशरधि[illegible]तोसवरू[illegible]क्षौमतिना
त्रैपुरसंहारेशरीकृतस्यविष्णोर्विश्रांतिस्थानत्वात् तथाभुवनेषुविदिताःख्याताःव्यासःप्रष्ठोःग्रेयेषांतेव्यासप्रमुखावसि[illegible]शंसाया[illegible]हेतुनातवाध

एतच्चइत्यादावित्यनेनान्वितं अस्याप्रस्तुतप्रशंसायाः सैव अप्रस्तुतप्रशंसैव लावण्येति इमांतन्वींतन्वतासृजतावेधसाचेतसिकोऽर्थःकामनाविषय
भूतःविनिहितः अभिसंहितः किंप्रयोजनमुद्दिश्येयंनिर्मितेत्यर्थः नन्वनायासेनातिसुंदरतन्वीनिष्पत्तिरेवप्रयोजनंतदभावेपिवालीलामात्रेण त
न्निर्माणंस्यादतआह लावण्येत्यादि यतोलावण्यरूपस्यद्रविणस्यधनस्यव्ययोनगणितः महान्क्लेशोर्जितःकृतःस्वेच्छाचारिणोजनस्यउदासीनस्या

अत्रापिवर्तमाना ननिवारयितुंशक्या अन्यस्तुत्याऽन्यस्तुतिरन्यनिंदयान्यनिंदेत्येवंव्याजस्तुतिव्याजनिंदे अपिसंभवतश्चेत्कामंते
अपिसंभवेतां नत्वस्याःपरित्यागः यद्यपिविधिरेवविशेषगर्हणीयइतिश्लोकेविधिनिंदयातन्मूलकाकनिंदयाचा विशेषज्ञस्यप्रभो
स्तेनचविद्वत्समतयास्थापितस्यमूर्खस्यचनिंदाप्रतीयतइतितत्रसारूप्यनिबंधनाःप्रस्तुतप्रशंसाप्यस्ति तथापिसैवव्याजनिंदामू
लेतिप्रथमोपस्थितासापितत्रदुर्वारा एवंचव्याजनिंदामूलकव्याजनिंदारूपेयमप्रस्तुतप्रशंसेतिचमत्कारातिशयः एवमेवव्याजस्तु
तिमूलकव्याजस्तुतिरूपाप्यप्रस्तुतप्रशंसादृश्यते यथावा लावण्यद्रविणव्ययोनगणितःक्लेशोमहानर्जितःस्वच्छंदंचरतोजनस्य
हृदयेचिंताज्वरोनिर्मितः एषापिस्वगुणानुरूपरमणाभावाद्वराकीहतासाकोर्थश्चेतसिवेधसाविनिहितस्तन्वीमिमांतन्वता अत्राप्र
नरद्रुगयास्तरुण्याःसृष्टिनिंदाव्याजेनतन्निंदाव्याजेनचतत्सौंदर्यप्रशंसाप्रशंसनीयत्वेनकविविवक्षितायाःस्वकवितायाःसृष्टिनिंदा
[illegible]तन्निंदाव्याजेनचशब्दार्थचमत्कारातिशयप्रशंसायांपर्यवस्यति १ पिहृदयेचिंतैवज्वरोनिर्मितःएषापिवराकीदीनास्वगुणानुरूप
(र)मणस्याभावाद्धतेवहतानष्टप्रायातथाचबह्वायाससाध्यत्वादनिष्टानुबंधित्वाच्च नतन्व्याःप्रयोजनत्वं नापिलीलामात्रेणतन्निर्माणंचसंभवतीतिभावः।
तन्निंदाव्याजेन तरुणीनिंदाव्याजेन तत्सौंदर्यप्रशंसाशब्दार्थचमत्कारातिशयप्रशंसायांपर्यवस्यतीत्यन्वः तन्निंदाव्याजेन स्वकवितानिंदाव्याजेन कवितासौंदर्य

प्रस्तुतार्थस्यात्यंतमस्फुटत्वात्कथमस्य पद्यस्य तत्परत्वमित्याशंकामपनेतुं भूमिकामारचयति अस्येत्यादि रसाननुगुणत्वादिति वीतरागे शृंगारस्या
संभवादितिभावः ननु शृंगारासंभवेपि तन्वीनिर्माणनिंदयाशांतरसपरिपोषादस्यैव रसानुगुणत्वमत आह वीतरागेति नापिरागिण इत्यनंतरं इमेविक
ल्पास्तन्न घज्यते विवक्षितेति स्वकवितासौंदर्यरूपेत्यर्थः अतएव वाच्यार्थासामंजस्यादेव वाच्यासंभवेपि वाच्यसामंजस्यासंभवेपि तथा चवाच्या
पि विवक्षितं व्यंग्यस्यमेवास्फुटेप्यप्रस्तुतार्थे तात्पर्यं गमयतीतिभावः इत्यलंकारचंद्रिकायां व्याजनिन्दाप्रकरणम् आक्षेपइति स्वयमुक्तस्यार्थस्य किंचिन्नि

अस्यश्लोकस्य वाच्यार्थविषये यद्यपिनात्यंतसामंजस्यं नह्यीमेविकल्पा वीतरागस्येति कल्पयितुंशक्यं रसाननुगुणत्वात् वीतरागह
दयस्याप्येवंविधविषयेषु प्रवृत्तेश्च नापिरागिण इति युज्यते तदीयविकल्पेषु वराकीतिरूपणतालिंगितस्य हतेत्यमंगलोपहितस्य
चवचसोऽनुचितत्वात् तुल्यरमणाभावादित्यस्यात्यंतमनुचितत्वाच्च स्वात्मनितदनुरूपत्वासंभावनायामपिरागित्वेहि पशुप्रायतास्या
त् तथापि विवक्षितप्रस्तुतार्थे तायां न किंचिदसामंजस्यं अतएवास्यश्लोकस्याप्रस्तुतप्रशंसापरत्वमुक्तं प्राचीनैः वाच्यासंभवेप्यप्र
स्तुतप्रशंसोपपत्तेरिति आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणात् चंद्रसंदर्शयात्मानमथवास्तिप्रियामुखं अत्र प्रार्थितस्य चंद्रदर्शन
स्य प्रियामुखसत्वेनानर्थक्यं विचार्य अथवेत्यादि सूचितः प्रतिषेध आक्षेपः यथावा साहित्यपाथोनिधिमंथनोत्थं कर्णामृतं रक्षतहे
कवींद्राः यत्तस्य दैत्या इवलुंठनाय काव्यार्थचोराः प्रगुणीभवंति ९ मित्तमभिसंधाय प्रतिषेध आक्षेपः सूचितेति पक्षांतरपरिग्रहस्यपूर्वपक्षप्रति
क्षेपनियतत्वादितिभावः नचात्र कैमर्थ्यरूपपंचमप्रतीपप्रभेदेनगतार्थत्वंशंकनीयं तस्यात्र प्रतिषेधं प्रतिनिमित्तत्वेनाप्राधान्यात् असंदिग्धमुदाहरति राम
साहित्येति हेकविश्रेष्ठाः साहित्यसमुद्ररूपाणां भारतादीनां मंथनादिव परिशीलनादुत्थितं उत्पन्नं कर्णयोरमृतमिवाल्हादकं काव्यं रक्षत यद्यस्मात्तस्यलुंठनार्थं ५७

देत्या इव काव्यरूपस्यार्थस्य वित्तस्य चोराः प्रगुणीभवंति बहुली भवंतीत्यन्वयः गृण्हंत्विति यदिवेत्यथवेत्यनेनसमानार्थत्व लुप्तेषु अपहृतेषु स्वोल्लिखि
तेति स्वयमुद्भावितेत्यर्थः वैचित्र्याणां अर्थवैचित्र्याणां अर्थांतरपर्यवसितः अर्थांतरप्रतियोगिकत्वेनावस्थितः विशेषं व्यंग्यार्थविशेषं संघटनेति
संयोजनकाले उचितं यत्कैतववचनं मिथ्यावचनं तस्य परिहारस्तेनोपलक्षिते यथार्थवादित्वे इत्यर्थः नाहंदूतीत्यत्र हि दूतीगतमिथ्यावादित्वविशि
ष्टं लक्ष्यते तदभावस्तु यद्यपिनयथार्थवादित्वं तथापि तदुपलक्ष्यत्वात्तत्पर्यवसानोक्तिः नरेन्द्रेति संधिकरणार्थमागतानां दूतानामुक्तिः नरेन्द्राणां

गृह्णंतु सर्वे यदिवा यथेच्छं नास्तिक्षतिः क्वापि कवीश्वराणां रत्नेषु लुप्तेषु बहुष्वमर्त्यैरद्यापि रत्नाकर एवसिंधुः अत्र प्रथमश्लोकेनप्रा
र्थितस्य काव्यार्थचोरेभ्यो रक्षणस्य स्वोल्लिखितवैचित्र्याणां समुद्गतरत्नजालवद्दक्षमत्वं विचिंत्य प्रतिषेध आक्षेपः निषेधाभासमाक्षेपं
बुधाः केचन मन्वते नाहं दूती तनोस्तापस्तस्याः कालानलोपमः केचिदलंकारसर्वस्वकारादय इत्यमाहुः ननिषेधमात्रमाक्षेपः किंतुयो
निषेधोबाधितः सन् अर्थान्तरपर्यवसितः किंचिद्विशेषमाक्षिपति स आक्षेपः यथा दूत्या उक्तो नाहं दूतीतिनिषेधोबाधितत्वादाभासस्सः
संघटनकालोचितकैतववचनपरिहारेण यथार्थवादित्वे पर्यवस्यन्निदानीमेवागत्य नापिकोज्जीवनीयेति विशेषमाक्षिपति यथावा ।
नरेंद्रमौलेनवयं राजसंदेशहारिणः जगत्कुटुंबिनस्तेद्यनशत्रुः कश्चिदीक्ष्यते अत्र संदेशहारिणामुक्तो नवयं संदेशहारिण इतिनिषेधोनु

द्रांमौलिः श्रेष्ठः संधीतिसंधिकाले उचितं यत्कैतववचनं तत्परिहारेणोपलक्षिते इति पूर्ववदर्थः अत्राहुः संदेशहारिषु तन्निषेधस्य बाधात् संदेशहारिपदेन
कैतववचनप्रयोक्तृत्वविशिष्टं लक्ष्यते। तन्निषेधेन च सत्यवादित्वरूपो विशेषो व्यज्यते इत्ययमेवनिषेधेन विशेषाक्षेपो न तु सर्वजगतीपालकस्येत्यादि
र्विशेषो निषेधेन केवलेनाक्षेप्तुं शक्यते तस्य जगत्कुटुंबिन इत्युत्तरार्द्धगम्यत्वात् एवंस्थिते कथमुच्यते तव न कश्चिदपीत्यादीति तत्रोच्यते ॥ ३ ॥

नवयमितिनिषेधाभावेकेवलादुत्तरार्धान्नोक्तविशेषावगतिःस्यात् संधिकालोचितकैतववचनत्वेनैवसंभाव्यमानत्वात् अपितुतत्कालीनसंध्यभिप्रायमा
त्रावगमः निषेधेनतुतत्परिहारेयुक्तउक्तविशेषावगमइत्यनुभवसाक्षिकमेतत् सत्यवादित्वादिकंतूक्तविशेषेव्यंजनीयेद्वारभूतंनतुतदेवविशेषरूपमच
मत्कारित्वात् अतएवनाहंदूतीत्यत्रवस्तुवादित्वादिर्विशेषोव्यज्यतइत्यलंकारसर्वस्वकारः वस्तुवादित्वमादिर्द्वारभूतंयस्यतादृशोविशेषइतित
दर्थइति एतेननाहंदूतीतिपूर्वोदाहरणमपिव्याख्यातं अस्यैवप्रभेदांतरमाह आक्षेपोन्यइति प्रार्थनयामरणसूचनद्वारेण ———— गर्भितः व्यंग्यः

संधिकालोचितकैतववचनपरिहारेणयथार्थवादित्वेपर्यवस्यन्सर्वजगतीपालकस्यतवनकश्चिदपिशत्रुभावेनावलोकनीयः किंतु
सर्वेपिराजानोभृत्यभावेनसंरक्षणीयाइतिविशेषमाक्षिपति। आक्षेपोन्योविधौव्यक्तेनिषेधेचतिरोहिते गच्छगच्छसिचेत्कांततत्रै
वस्याज्जनिर्मम। अत्रगच्छेतिविधिर्व्यक्तः मागाइतिनिषेधस्तिरोहितः कांतोद्देशादेशेनिजजन्मप्रार्थनयात्ममरणसंसूचनेनगर्भी
कृतः यथावा नचिरंममतापायतवयात्राभविष्यति यदियास्यसियातव्यमलमाशंकयापिते अत्रापिनचिरंममतापायेतिस्व
मरणसंसूचनेनगमननिषेधोगर्भीकृतः। आभासत्वेविरोधस्यविरोधाभासइष्यते

९ त्वेनांतर्भावितः एतच्चतिरोहितइत्यस्यार्थकथ
नं तदेवमपह्नुतिभिन्नत्वेसतिचमत्कारकारिनिषेधत्वंसामान्यलक्षणंबोध्यम् इत्यलंकारचंद्रिकायामाक्षेपालंकारप्रकरणम् आभासत्व इति।
विरोधस्यआभासत्वेआपाततोभासमानत्वेसतिविरोधाभासोनामालंकारः आभासतइत्याभासः विरोधश्चासावाभासश्चेतिव्युत्पत्तेः ईषदर्थे
केनचाङाभानस्यापाततरूपत्वमर्थांतरपरिहार्यत्वरूपंबोध्यते तथाचैकाधिकरण्येनप्रतीयमानयोः कार्यकारणत्वेनागृह्यमाणयोर्धर्मयोराभासमाना
पर्यवसन्नविरोधत्वंलक्षणंद्रष्टव्यं शनिरशनिश्चतमुच्चैरित्यादावतिव्याप्तिवारणायाद्यंविशेषणम् अप्यलाक्षारसासिक्तंरक्तंतच्चरणद्वयमितिविभावनावार

एतेनप्रथमप्रकारात् द्वितीयप्रकारस्यवैलक्षण्यंदुरुपपादमितिवदन्नपास्तः वैलक्षण्य...
अस्तिचस्वरूपतःकारणाभावकथनात्कारणगत...
लाघवमितितन्नी...

पर्यवसितस्यविरोधस्यदोषत्वादपर्यवसन्नत्वंविरोधविशेषणमितिदिक् श्लेषेति हारोऽनयोस्तीत्यर्थे विरोधः मनोहारिणावित्यर्थे नतत्परिहारः प्रतीपे
ति तस्मान्नलात् भयेनकृत्वाप्रतिकूलन्नृपैरिवविरुद्धधर्मैरपिभेत्तृताभेदकारितास्यकाकिमित्युक्तेसा यस्मात्सनलः अमित्राणांशत्रूणांजयकृदपिओ
जसामित्रस्यखर्वेजयकृत् अथचमित्रजिदेवनमित्रजिदिति विरोधः चारदृष्टिरपिविचारेदृष्टिर्यस्यतादृशः विगतचारदृगितिचविरोधः विरोधेतिविरो
धसमाधानरूपाश्लेषाशिरःप्रधानंयस्यतादृशइत्यर्थः यत्तुविरोधसमाधानात्मिकयामुखस्थितयाश्लेषयाविरोधस्योत्थानमेवभग्नमितिकथमत्र
विरोधालंकारइतिकेनचित्तुमनसापिविमनसेवाभिहितं तदसारं विरोधभानमंतरेणविरुद्धधर्मैरपीत्याद्युक्तेश्लेषायाएवानुत्थानेनश्लेषमूलमाभासमानं

विनापितन्विहारेणवक्षोजौतवहारिणौ अत्रहाररहितावपिहारिणौहृद्यावितिश्लेषमूलकोविरोधाभासः यथावा प्रतीपभूपैरिवकिंत
तोभियाविरुद्धधर्मैरपिभेत्तृतोज्झिता अमित्रजिन्मित्रजिदोजसास्मयद्विचारदृक्चारदृगप्यवर्तत अत्रविरोधसमाधानोश्लेषाशिरस्को
विरोधाभासइतिपूर्वस्माद्भेदः। विभावनाविनापिस्यात्कारणंकार्यजन्मचेत् अप्यलाक्षारसासिक्तंरक्तंत्वच्चरणद्वयं

९ विरोधमुपजीव्यैव
विरोधत्यागोश्लेषाया अर्थांतरानुगृहीतायास्तत्समाधानत्वेनपश्चादवस्थितत्वादिति    इत्यलंकारचंद्रिकायांविरोधप्रकरणम् विभावनेति प्रसिद्धकारणा
भावेपिकार्योत्पत्तिर्विभावनालंकारः विभाव्यतेकारणांतरंयस्यामितिव्युत्पत्तेः कारणाभावश्चशाब्द आर्थोवेतिसर्वत्रलक्षणसमन्वयोबोध्यः एतदेवतंत्रे
णासकलविभावनाप्रकारसाधारणंसामान्यलक्षणमाद्यप्रकारविशेषलक्षणंचबोध्यम् तत्राद्यंदर्शितमेव द्वितीयंतुकारणान्विताभावकथनपूर्वकंकार्यो
[illegible]नमित्तु[illegible]हरणविशेषबलादेवगम्यतइतिविविच्यनदर्शितं प्रतिबंधकेसतिकार्योत्पत्तिरूपतृतीयप्रकारेऽतिव्याप्तेर्वारणायान्वितेति। तत्रप्रति
[illegible]कस्यकथनेपिनकारणान्वितत्वेनकथनमितितन्निरासः प्रकारपंचकेपिकारणान्विताभावस्यार्थतोगम्यत्वात्कथनेति अप्यला

...लाक्षारससिक्तं पश्चात्कर्मधारयसमासः तस्याः कामिन्याः अपीतेति अपीताः पानशून्याः क्षीबा मत्ताः कादंबाः कलहंसा यत्र त
...नीरजेनशून्यममलमंबरमाकाशं यत्र एवमप्रसादितं वस्त्रगालनकतकक्षोदप्रक्षेपादिना यत्प्रसादनं तच्छून्यं सूक्ष्मं लघ्वंबु यत्रैवंभूतं ज
 गन्मनोहरमासीदित्यन्वयः परमार्थतस्तु शुद्धं विस्तेव काव्यादर्शे दृष्टः पाठः विभाव्यमानेति वर्ण्यमानेत्यर्थः वरेति वरतनोः केशपाशरचनासंपादकेन अ

अत्र लाक्षारसासेकरूपकारणाभावेपिरक्तिमा कथितः स्वाभाविकत्वेन विरोधपरिहारः यथावा अपीतक्षीबकादंबमसंमृष्टामलांबरं
अप्रसादितशुद्धांबुजगदासीन्मनोरमं अत्र पानादिप्रसिद्धहेत्वभावेपि क्षीबत्वादिनिबद्धं विभाव्यमानशरत्समयहेतुकत्वेन विरो
धपरिहारः यथावा वरतनुकबरीविधायिना सुरभिनखेन नरेन्द्रपाणिना अवचितकुसुमापि वल्लरीसमजनि वृंतनिलीनषट्पदा
अत्र वल्लर्या पुष्पाभावेपि भृंगालिंगनं निबद्धं तत्र वरतनुकबरीसंक्रांतसौरभनरपतिनखसंसर्गरूपं हेत्वंतरं विशेषणमुखेन दर्शितमि
तिविरोधपरिहारः हेतूनामसमग्रत्वे कार्योत्पत्तिश्च सा मता अस्त्रैरतीक्ष्णकठिनैर्जगज्जयति मन्मथः अत्र जगज्जयेसाध्ये हेतूना
मस्त्राणामसमग्रत्वं तीक्ष्णत्वादिगुणवैकल्यं यथावा उद्यानमारुतोद्धूताश्चूतचंपकरेणवः उदस्रयंति पांथानामस्पृशंतो विलोच
ने अत्र बाष्पोद्गमनहेतूनामसमग्रत्वं स्पर्शनक्रियावैकल्यं इमां विशेषोक्तिरिति दंडी व्याजहार ९ तएवसुरभिनखेन राज्ञो हस्तेन अवचि

तकुसुमाल्लूनपुष्पापि लता वृंतासक्तभ्रमरा संजातेत्यर्थः हेतूनामिति असमग्रत्वे हेतुतावच्छेदकस्य धर्मस्य तत्संबंधस्य वा वैकल्ये सति अस्त्रैरिति
धर्मवैकल्योदाहरणं संबंधवैकल्ये उदाहरति उद्यानेति विलोचने कर्मभूते उदस्रयंति उद्गताश्रूणि कुर्वंतीत्यर्थः क्रियेति धात्वर्थत्वाभिप्रायं स्पर्शनस्य संयो
गरूपत्वात् इमां द्वितीयप्रकाररूपां विभावनां व्याजहारेति गुणजातिक्रियादीनां यत्र वैकल्यदर्शनं विशेषदर्शनायैव सा विशेषोक्तिरिष्यत इति ग्रंथेन



एतेन प्रथमप्रकारात् द्वितीयप्रकारस्य वैलक्षण्यं दुरुपपादमिति वदन्नपास्तः वैलक्षण्याभावे हि प्राचामलंकारांतरत्वेन कथनमत्यंतानुपपन्नमेव स्यात्
अस्ति च स्वरूपतः कारणाभावकथनात्कारणगतधर्मवैकल्यद्वारेण तद्विशिष्टकारणाभावकथने सहृदयसिद्धो विच्छित्तिविशेषः प्रकारांतरास्वीकारे
लाघवमिति तुस्वीपलाघवोद्भावनमिति कृतमधिकेन कार्योत्पत्तिरिति प्रतिबंधके सत्यपि कार्योत्पत्तिकथनं तृतीया विभावना नरेंद्रानिति नरेंद्रो वार्णि

पतस्तत्र प्रथमोदाहरणे मन्मथस्य महिमातिशयरूपो द्वितीयोदाहरणे चंपकरेणूनामुद्दीपकतातिशयरूपश्च विशेषः ख्याप्यत इति
अस्माभिस्तु तीक्ष्णत्वादिवैकल्यमपि कारणविशेषाभावरूपमिति विभावना प्रदर्शिता कार्योत्पत्तिस्तृतीयास्यात्सत्यपि प्रतिबंधके न
रेंद्रानेव ते राजन्दशत्यसि भुजंगमः अत्र नरेंद्रा विषवैद्याः सर्पदंशप्रतिबंधकमंत्रौषधिशालिनः श्लेषेण गृहीताः इति सत्येव प्रतिबंधके का
र्योत्पत्तिः यथावा चित्रं तपति राजेंद्र प्रतापतपनस्तव अनातपत्रमुत्सृज्य सातपत्रं द्विषद्गणं अकारणात्कार्यजन्म चतुर्थी स्याद्विभाव
ना शंखाद्वीणानिनादोयमुदेति महदद्भुतं अत्र शंखत्वेन कमनीयः कामिनीकंठस्तत्रीनिनादत्वेन तद्गीतं चाध्यवसीयत इत्यकारणात्का
र्यजन्म यथावा तिलपुष्पात्समायाति वायुश्चंदनसौरभः इंदीवरयुगाच्चित्रं निःसरंति शिलीमुखाः विरुद्धात्कार्यसंपत्तिर्दृष्टा काचिद्वि
भावना शीतांशुकिरणास्तन्वीं हंत संतापयंति तां अत्र तापनिवर्तकतया तापविरुद्धैरिंदुकिरणैस्तापजनिरुक्ता यथावा उदिते कुमारस्त्व
यैकुवलयमुल्लसति भाति नक्षत्रं मुकुलीभवंति चित्रं परराजकुमारपाणिपद्मानि ९ केरात्ति विषवैद्येपि कथ्यत इति बिम्बः असिः खड्ग एव भुजंग
मः चित्रमिति प्रतापएवतपनः सूर्यः आतपत्रं छत्रं तद्रहितमनातपत्रं आतपत्रेण सहितं सातपत्रं उदित इति कस्य चिद्राजकुमारस्य प्रतापवर्णनं कु
मारस्वरूपे सूर्ये उदिते सति कौः पृथिव्या वलयं मंडलमेव कुवलयं कुमुदमुल्लासं प्राप्नोति क्षत्रं क्षत्रियकुलं न भाति अथ च नक्षत्रं भातीति चित्रं तथा परेषां राजकु

कु॰नं॰ चं॰टी॰ ६०

अंजलिबंधाञ्जल्याकृतीनिभवंतीत्यर्थः अविवेकीति विवेकोविशेषदर्शनं विश्लेषश्चतच्छून्यं परस्परंसंश्लिष्टत्वात् कुचयुगंकर्तृजगत्त्रयंहंतुनाम श्रुतिर्वेदः
कर्णश्चप्रणयः परिचयः यशइतिकरएवदातृत्वात्कल्पतरुः अत्रपयोधिजन्यात्कल्पतरोः कारणस्यपयोधेरुत्पत्तिः षष्ठीविभावनाजातेतिजातु कदाचित्कन
कतलेवकनकलताकामिनीगिरिद्वयमिवस्तनद्वयं इत्यलंकारचंद्रिकायांविभावनाप्रकरणं विशेषोक्तिंलक्षयति कार्याजनिरिति पुष्कलेसहकारिसं
पन्नेकारणेसतिप्रसिद्धकारणसमूहेसतीतियावत्कार्यस्याजनिरनुत्पत्तिर्विशेषोक्तिः विशेषस्यअनुत्पत्तिनिमित्तस्योक्तिरेवगतिर्यत्रेतिव्युत्पत्तेः अनुरा

यथावा अविवेकिकुचद्वंद्वंहंतुनामजगत्त्रयं श्रुतिप्रणयिनोरक्ष्णोरयुक्तंजनमारणं पूर्वोदाहरणयोः कारणस्यकार्यविरोधित्वंस्वा
भाविकं इहतुश्रुतिप्रणयित्वरूपागंतुकगुणप्रयुक्तमितिभेदः कार्याकारणजन्मापिदृष्टाकाचिद्विभावना यशःपयोराशिरभूत्कर
कल्पतरोस्तव यथावा जातालताहिशैलेजातुलतायांनजायतेशैलः संप्रतितद्विपरीतंकनकलतायांगिरिद्वयंजातं कार्याजनिर्वि
शेषोक्तिः सतिपुष्कलकारणे हृदिस्नेहक्षयोनाभूत्स्मरदीपेज्वलत्यपि यथावा अनुरागवतीसंध्यादिवसस्तत्पुरःसरः अहोदै
वगतिश्चित्रातथापिनसमागमः असंभवोर्थनिष्पत्तेरसंभाव्यत्ववर्णनं कोवेदगोपशिशुकःशैलमुत्पाटयेदिति अयंवारामकौ
निलयइतिरत्नाकरइतिश्रितोस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः ॥ गेति अनुरागोरक्तिमारतिश्चपुरःसरोऽग्रवर्ती आज्ञाकरश्चपूर्वो

दाहरणेनुक्तनिमित्ता इहदैवगतिवैचित्र्यस्यनिमित्तस्योपादानादुक्तनिमित्तेति भेदः इतिविशेषोक्तिप्रकरणम् असंभवइति कस्यचित्पदार्थस्यनिष्प
त्तेरसंभावनीयत्ववर्णनमसंभवोनामालंकारः गोपशिशुकः गोपालबालकः निंदायांस्वार्थेवाकप्रत्ययः उत्पाटयेत् उद्धरेत् अयमिति वारांजलानां नि
लयःस्थानं तृष्णापिपासा अर्थाभिलाषश्च तरलितं चंचलीकृतं श्रितःआश्रितः मुनिरगस्त्यः एनंसमुद्रंक्षणात् आसमंतात्पास्यति ॥ ॥ राम॰ ६०

इदंकोजानीतइत्यन्वयः कीदृशं निजकरपुटीकरसंपुटमेवकोटरंविलंतद्गतं तथाताम्यंतोग्लायंतस्तिमयोमत्स्यामकराश्चयस्यैवंभूतमित्यर्थः इत्यसंभ
वालंकारप्रकरणम् ॥ विरुद्धमिति अदृष्टमित्यर्थः भिन्नदेशत्वं भिन्नाधिकरणत्वं विषंजलं हालाहलंच संगतस्यभावः सांगत्यंतदभावोऽसांगत्यं अ
जस्रमिति दमयंतींप्रतिहंसोक्तिः हेदमयंतित्वं तदीयां नलसंबंधिनींदूरमत्यंतंदीर्घासंकल्पोमनोरथस्तद्रूपसोपानपरंपरांअजस्रंनिरंतरमारोहसि सपुन
र्नलः अधिकंश्वासान् वर्षतिमुंचतीतियत्तत्तवध्यानात्तन्मयतांत्वत्स्वरूपतामवाप्येत्यन्वयः अत्रचतुर्थपादेनासंगतिसमाधानं भ्रूचापेति भ्रूचाप

कएवंजानीतेनिजकरपुटीकोटरगतंक्षणादेनंताम्यत्तिमिमकरमापास्यतिमुनिः विरुद्धंभिन्नदेशत्वंकार्यहेतोरसंगतिः विषंजलध
रैःपीतंमूर्छिताःपथिकांगनाः ययोःकार्यहेत्वोर्भिन्नदेशत्वंविरुद्धं तयोस्तन्निबध्यमानमसंगत्यलंकारः यथात्रविषपानमूर्छयोर्भिन्न
देशत्वं यथावा अहोखलभुजंगस्यविचित्रोयंवधक्रमः अन्यस्यदशतिश्रोत्रमन्यःप्राणैर्वियुज्यते क्वचिदसंगतिसमाधाननिबंधने
नचारुत्वातिशयः यथावा अजस्रमारोहसिदूरदीर्घांसंकल्पसोपानततिंतदीयां श्वासान्सवर्षत्यधिकंपुनर्यद्ध्यानात्तवत्वन्मयता
मवाप्यविरुद्धमितिविशेषणाद्यत्रकार्यहेत्वोर्भिन्नदेशत्वंनविरुद्धंतत्रनासंगतिः यथा भ्रूचापवल्लींसुमुखीयावन्नयतिवक्रतां ताव
त्कटाक्षविशिखैर्भिद्यतेहृदयंमम अन्यत्रकरणीयस्यततोन्यत्रकृतिश्चसा अन्यत्कर्तुंप्रवृत्तस्यतद्विरुद्धकृतिस्तथा अपारिजातांवसु

वल्लीं भ्रूस्वरूपधनुर्लतांयावदितिपरिमाणार्थे वक्रतांनयति आकर्षतीतियावत् तावत्परिमाणंहृदयंभिद्यतइत्यर्थः अत्रहृदयभेदधनुराकर्षणयोःकार्यका
रणयोर्भिन्नदेशत्वमेवदृष्टमितिनासंगतिरलंकारः अन्यत्रेति अन्यत्रकर्तव्यस्यवस्तुनस्ततोन्यस्मिन्नधिकरणेयाकृतिः करणंतदपिअसंगतिरित्यनुषज्य
ते तथा अन्यत्कार्यंकर्तुंप्रवृत्तस्यतद्विरुद्धकार्यकरणंतृतीयाअसंगतिः अपगतमरिजातंयस्यास्तां द्यांस्वर्गं तथापारिजाततरुरहितांअकृथाःकृतवान्

एवंगोत्रायाः पृथिव्या उद्धाराय पुरा वराहावतारे प्रवृत्तोपि त्वं गोत्राणां पर्वतानामुद्भेदं दलनमकरोः कृतवानित्यर्थः श्लेषोत्थापिता श्लेषमूलकाभेदाध्यव
सायोत्थापिता यथा वेति हे भुवनैकवीर चोलदेशाधिपसिंहसदृश तव खड्गेन खण्डिता ये सपत्नाः शत्रव स्तद्विलासिनीनाम् भिन वा अदृष्टपूर्वा भूषा भू
षणानि भवंति यथा नेत्रेषु कंकणं जलकणमेव कंकणं वलयं भवतीत्यनुषंगः अथेति समुच्चये ऊरुषु च पत्र पुष्पावल्लीसेव पत्रिकारचना करपल्लवेषु ति
लयुक्तं कंजलमेव ललाटभूषणमिति मोहमिति हे अखिलेश्वर जगत्त्रयवर्त्तिनां देहधारिणां मोहमपनेतुं एतद्रूपं कृष्णशरीरमादाय मर्यादातिक्रांत

गोत्रोद्धारप्रवृत्तोपि गोत्रोद्भेदं पुरा करोः अत्र कृष्णं प्रति शक्रस्य सोपालंभवचने भुवि चिकीर्षित तया तत्र करणीयं अपारिजातत्वं दि
विकृतमित्येकाः संगतिः पुरा गोत्राया उद्धारे प्रवृत्तेन वाराहरूपिणा तद्विरुद्धं गोत्राणां दलनं खुरकुट्टनैः कृतमिति द्विविधापि श्ले
षोत्थापिता यथा वा त्वत्खड्गखण्डितसपत्नविलासिनीनां भूषा भवंत्यभिनवा भुवनैकवीर नेत्रेषु कंकणमथोरुषु पत्रवल्ली चोलेंद्रसिं
ह तिलकं करपल्लवेषु मोहं जगत्त्रयभुवामपनेतुमेतदादाय रूपमखिलेश्वर देहभाजां निःसीमकांतिरसनीरधिनामुनैव मोहं प्रवर्द्ध
यसि मुग्धविलासिनीनां अत्राद्योदाहरणे कंकणादीनामन्यत्र कर्त्तव्यत्वं प्रसिद्धमिति नोपन्यस्तं भवतिना भावनारूपा अन्यत्र कृति
राक्षिप्यत इति लक्षणानुगतिः ११ कांतिरूपरससमुद्रेणामुनैव रूपेण सुंदरस्त्रीणां मोहं प्रवर्द्धयसीत्यन्वयः अत्रेति अनयोर्मध्य इत्यर्थः आद्योदा
हरणे इति लक्षणानुगतिरित्यन्वयः भवतिना भवत्यर्थेन भवनेनेति यावत् भावनारूपा भवनप्रयोजकव्यापाररूपा यत्तु अन्यत्र करणीयस्येत्याद्यासंग
तिप्रकारद्वयांतरकथनमयुक्तं अपारिजातामित्युदाहरणे पारिजातराहित्यचिकीर्षारूपकारणस्य कार्येण पारिजातराहित्येन वैयधिकरण्योपनिबं राम
धनेन प्राथमिकासंगतितो वैलक्षण्यानुपपत्तेः आलंबनाख्यविषयतासंबंधेन चिकीर्षायाः सामानाधिकरण्येन कार्यमात्रं प्रति हेतुत्वात् एवं नेत्रेषु ६१

कंकणमित्यादौ कंकणत्वनेत्रालंकारत्वयोर्विरुद्धयोः सामानाधिकरण्यवर्णनाद्विरोधाभासत्वमुचितं एवं गोत्रोद्धारप्रवृत्तोपीत्युदाहरणे विरुद्धका
र्यसंपत्तिर्दृष्टा काचिद्विभावनेत्युक्तविभावनाप्रकारेणैव गतार्थत्वाद् संगतिभेदांतरकल्पनानुचिता मोहमित्यादावपि मोहनिवर्त्तकत्वमोहजनकत्वयो
र्विरुद्धयोरेकत्र वर्णनाद्विरोधाभास एवेति कैश्चिदुक्तं तदसंगतं उक्तसंबंधेन चिकीर्षाया हेतुत्वासिद्धेः नहि यदधिकरणे कार्यं चिकीर्षा तदधिकरणमंत
र्भाव्योक्तसंबंधेन चिकीर्षायाः कार्यहेतुत्वं तां त्रिकसमतं युक्तं वा अन्यत्र चिकीर्षितस्यापि प्रमादादिनान्यत्र करणे नव्यभिचारात् अत एवैवं विधवैयधि
करण्यस्य विरुद्धत्वादपि न प्राथमिकासंगत्यंतर्भावसंभवः वस्तुतस्तु विषं जलधरैः पीतं मूर्छिताः पथिकांगना इत्यत्रेव नात्र कार्यकारणवैयधिकर
ण्यप्रयुक्तो विच्छित्तिविशेषोपि त्वन्यत्र कर्त्तव्यस्यान्यत्र करणप्रयुक्त एवेति सहृदयमेव प्रष्टव्यं एवं नेत्रेषु कंकणमित्यत्रसत्यपि विरोधाभासेऽन्यत्र चम

विषमं वर्ण्यते यत्र घटनाननुरूपयोः क्वेयं शिरीषमृद्वंगी क्व तावन्मदनज्वरः अत्रापि मृदुत्वेनातिदुःसहत्वेन चाननुरूपयोरंगनामदनज्व
रयोर्घटना ११ त्कारित्वेन कृतालंकारभावाऽन्यत्र करणरूपाऽसंगतिरपि प्रतीयमाना न शक्या निराकर्तुं एवं गोत्रोद्धारप्रवृत्तोपीत्युदाहरणे गोत्रोद्धारवि
षयकप्रवृत्तेर्गोत्रोद्भेदरूपकार्यविरुद्धत्वाद्विरुद्धकार्यसंपत्तिरपि विभावनेत्यपि न युक्तं गोत्रोद्धारप्रवृत्तेर्गोत्रोद्भेदनिवर्त्तकत्वाभावेन तद्विरुद्धत्वाभावात् कथं
चित्तदभ्युपगमेपि अन्यत्कार्यकर्तुं प्रवृत्तेन तद्विरुद्धकार्योत्तरकरणरूपाऽसंगतिरपि मोहं जगत्त्रयभुवामित्यादौ चमत्कारित्वेन लब्धात्मिका न निवारयि
तुं शक्यते नचात्रापि मोहनिवर्त्तकान्मोहोत्पत्तेः सैव विभावनेति वाच्यम् मोहनिवर्त्तकस्यासिद्धवदप्रतीतेः अत एव न विरोधाभासोपि विशेषोक्तिकथनेन त
त्रासंगतमेव नहि गोत्रोद्धारविषयकप्रवृत्तिरूपकारणसत्त्वेपि गोत्रोद्धाररूपस्य कार्यस्यानुत्पत्तिरिह प्रतिपाद्यते किंतु विरुद्धकार्योत्पत्तिरेवेति विभावनी
यम् इत्यसंगतिप्रकरणम् विषममिति परस्परमानुरूप्यरहितयोः पदार्थयोर्यत्र घटनासंबंधो वर्ण्यते तत्र विषमं नामालंकारः ॥

संबंधश्चसंयोगादिः उत्पाद्योत्पादकभावश्चेति सर्वप्रकारसाधारणमेतल्लक्षणं बोध्यम् अभिलषसीति अंकं कलंकं संक्षालय प्रक्षालय अथप्र
क्षाल्य नानंतरं नो चेत्तस्या मुखं कलंकद्दतिवदेत्यन्वयः वस्तुसती वस्तुगत्या विद्यमाना चंद्रेति चंद्रश्च वदनलक्ष्मीश्च तयोरित्यर्थः विरूपकार्यस्ये
ति कारणविलक्षणस्वरूपस्येत्यर्थः रूपाणिका खड्गप्रक्रमेणेति प्रक्रमः परिपाटी स्वसजातीयकार्यगुणोत्पादकत्वरूपा विरुद्धाकार्यसंपत्तिरिति पंच
मविभावनाप्रकारेणाभेदमाशंक्याह कार्येति अयं विषमः उक्तविषमालंकारभेदः तृतीयप्रकारमाह अनिष्टस्यापीति अपिर्भिन्नक्रमः इष्टार्थस

यथावा अभिलषसि यदींदो वक्त्रलक्ष्मीं मृगाक्ष्याः पुनरपि सकृदब्धौ मज्जसंक्षालयांकं सुविमलमथ बिंबं पारिजातप्रसूनैः सुर
भयवदनो चेत्त्वं कृतस्या मुखं कपूर्वत्र वस्तुसती घटना अत्र च चंद्रवदनलक्ष्म्योस्तर्किता घटनेति भेदः विरूपकार्यस्योत्पत्तिरपरं वि
षमं मतं कीर्तिप्रसूते धवलाश्यामा तव कृपाणिका अत्र कारणगुणप्रक्रमेण विरुद्धाच्छ्यामाद्धवलोत्पत्तिः कार्यकारणयोर्निवर्त्य
निवर्तकत्वे पंचमी विभावना विलक्षणगुणशालित्वे त्वयं विषम इति भेदः अनिष्टस्याप्यवाप्तिश्च तदिष्टार्थसमुद्यमात् भक्ष्या
शयाहि मंजूषां दृष्ट्वाखुस्तेन भक्षितः इष्टार्थमुद्दिश्य किंचित्कर्मारब्धवतो न केवलमिष्टस्यानवाप्तिः किंतु ततोनिष्टस्यापि प्रतिलंभ
श्चेत्तदपि विषमं यथा भक्ष्यप्रेप्सया सर्पपेटिकां दृष्ट्वा प्रविष्टस्य मूषकस्य न केवलं भक्ष्यालाभः किंतु स्वरूपहानिरपीति यथावा

मुद्यमात् अनिष्टस्यावाप्तिरपि च तत् विषममित्यर्थः अपिना इष्टानवाप्तिः संगृह्यते चकारः पूर्वोक्तविषमसमुच्चयार्थः भक्ष्येति अहिमं
जूषां सर्पपेटिकां दृष्ट्वा भक्ष्यस्याशया प्रविष्ट आखुर्मूषकस्तेनाहिना भक्षित इत्यन्वयः यत्तु प्रविष्ट इत्यस्यागम्यमानत्वान्न्यूनपदत्वमिति केनचिदु राम
क्तं तदभिनिवेशदुष्टस्वहृदयानुभवविकत्थनमित्युपेक्षणीयं अनिष्टस्यापि प्रतिलंभ इत्यत्राप्यपिर्भिन्नक्रमो बोध्यः ॥ ॥ ५ ॥ ५ ॥ ६२

गोपाल इति हे कृष्ण त्वं गोपाल इति हेतोर्बहुदुग्धवांछया श्रितः आश्रितः त्वया तु मातुः स्तनदुग्धमप्यलभ्यं कृतं मुक्तिदानेनेति भावः पूर्वत्रेष्टानवाप्तिरर्थ इत्या
दह त्वपिशब्द इत्यस्येति विशेषः इदमिति उदाहरणमिति च जातावेकवचनं दिवीति भुवि सैंहिकेयस्य सिंहीपुत्रस्य सिंहस्य भयात् दिवि आकाशे चं
द्रमाश्रितवतः शशस्य साश्रयस्याश्रयसहितस्य ततः सैंहिकेयाद्राहोर्भयमेतत् हेतन्वंगि पश्येत्यन्वयः परेति परस्यानिष्टावाप्तिरूपाय इष्टार्थ इत्य
र्थः। तदुभयं इष्टानवाप्त्यनिष्टावाप्तिद्वयं दिधक्षन्निति दशाननो रावणः मारुतेर्हनुमतो बालं पुच्छं दग्धुमिच्छुस्तं बालमादीप्य दीपयति स्मेत्यर्थः प्रत्येक

गोपाल इति कृष्ण त्वं प्रचुरक्षीरवांछया श्रितो मातुः स्तनक्षीरमप्यलभ्यं त्वया कृतं इदमर्थावाप्तिरूपेष्टार्थसमुद्यमादिष्टानवाप्त्यभाव
निष्टप्रतिलंभे चोदाहरणं अनर्थपरिहारार्थरूपेष्टार्थसमुद्यमात्तदुभयं यथा दिवि श्रितवतश्चंद्रं सैंहिकेयभयाद्भुवि शशस्य पश्यत
न्वंगि साश्रयस्य ततो भयं अत्र न केवलं शशस्य स्वानर्थपरिहारानवाप्तिः किंतु साश्रयस्याप्यनर्थावाप्तिरिति दर्शितं परानिष्टप्रापणरू
पेष्टार्थसमुद्यमात्तदुभयं यथा दिधक्षन्मारुतेर्वालं तमादीप्य दशाननः आत्मीयस्य पुरस्यैव सद्यो दहनमन्वभूत् पुरस्यैवेत्येवकारे
ण परानिष्टप्रापणाभावो दर्शितः अनिष्टस्याप्यवाप्तिश्चेति श्लोके निष्टावाप्तेरपिशब्दसंगृहीताया इष्टानवाप्तेश्च प्रत्येकमपि विष
मपदेनान्वयः ततश्च केवलानिष्टप्रतिलंभः केवलेष्टानवाप्तिश्चेत्यन्यदपि विषमद्वयं लक्षितं भवति तत्र केवलानिष्टप्रतिलंभो यथा।
पद्मातपत्ररसिके सरसीरुहस्य किं बीजमर्पयितुमिच्छसि वापिकायां ॥ मपीति अपिना इष्टानवाप्तिसमुच्चिताया अनिष्टावाप्तेर्विषमप
देनान्वयः समुच्चीयते विषमपदेन विषमपरामर्शकेन तत्पदेन तथा च तात्पर्यबलाद्द्वयमावर्त्तनीयमिति भावः यत्त्वनिष्टस्यैव तदुत्तरापिशब्द
समुच्चिताया इष्टानवाप्तेरप्याप्नोतीति नैवान्वयो न तु तत्पदपरामृष्टेन विषमेण अव्युत्पन्नैरिति। तत्प्रागेवापिशब्दान्वयव्याख्यानेन निरस्तं वेदितव्यं पद्मेति।

दयितांप्रतिनायकोक्तिः पद्मस्यातपत्रंछत्रंतत्ररसिकेहेतन्विवापिकायांसरसीरुहस्यपद्मस्यकंदमर्पयितुंकिमितीच्छसि यतः हे अज्ञेकलियुगरूपः कालः इदंजगत्कृतघ्नंचनभवति ततःकिंतत्राह इदंसरसीरुहंस्थित्वातवैवमुखस्यलक्ष्मींहरिष्यतिनत्वन्यस्यादित्यर्थः खिन्नोसीति विभ्रमः धारयामः वदत्सुगोपेषु शिथिलौभुजौयस्यसः भरेण शैलभारेणभुग्नावक्राः वितताविस्तीर्णावाहवोयेषांतथाभूतेषुसत्सुहसन् अत्रेति नचभरभुग्नेत्यनेनबाहुगतास्थिसंधिभंगरूपानिष्टप्राप्तेः साक्षादुपात्तत्वात्सर्वांगचूर्णीभावगर्वापहाररूपायाश्चस्फुटंगम्यमानत्वात्कथमिष्टाप्राप्तिमात्रमित्युच्य

कालःकलिर्जगदिदंनकृतज्ञमज्ञेस्थित्वाहरिष्यतिमुखस्यतवैवलक्ष्मीं अत्रपद्मातपत्रलिप्सयापद्मबीजावापंकृतवत्यास्तल्लाभोऽस्तेव किंतुमुखशोभाहरणरूपोत्कटानिष्टप्रतिलंभःकेवलेष्टानवाप्तिर्यथा खिन्नोसिशैलंबिभृमोवयमितिवदत्सुशिथिलभुजःभरभुग्नविततबाहुषुगोपेषुहसन्हरिर्जयति अत्रयद्यपिशैलस्योपरिपतनरूपानिष्टावाप्तिरपिप्रसक्तातथापिभगवत्करांबुजसंसर्गमहिम्नासानजातेतिशैलधारणरूपेष्टानवाप्तिमात्रं यथावा लोकेकलंकमपहातुमयंमृगांकोजातोमुखंतवपुनस्तिलकछलेन तत्रापि कल्पयसितन्विकलंकरेखांनाथैःसमाश्रितजनंहिकलंकयति अत्रानिष्टपरिहाररूपेष्टानवाप्तिः यथावा ॥ ७ ॥ ७ ॥ ॥

तइतिवाच्यं अस्थिसंधिभंगस्याशब्दार्थत्वात् भगवद्भुजशैथिल्यप्रयुक्तभाराधिक्येनवक्रतायाश्चस्यशब्दोपात्तस्यचक्लेशविशेषानाधायकत्वेनानिष्टव्यपदेशानर्हत्वात् सुहृद्भूतानांगोपानामनिष्टप्राप्तेरूहास्यानुपपत्तेश्च अतएवनसर्वांगचूर्णीभावोपिगम्यः गर्वप्रसक्त्यभावाच्चनतदपहारोपि यतश्चिरकालंशैलधारणजन्यश्रमपरिजिहीर्षयागोपानांप्रवृत्तिरिहावगम्यतइतिनिरवद्यं लोकइति हेतन्विलोकेप्रसिद्धंकलंकमपहर्तुंनिवारयितुंमृगांकस्तवमुखंजातः तत्रापिपुनस्तिलकव्याजेनकलंकरेखांत्वंकल्पयसिकरोषि हियस्मान्नाथैःसमाश्रितजनंस्वाश्रितजनंकलंकिनंकुर्वंतीत्यन्वयः राम ६३

शापोपीति मृगयायांप्रमादतोहतपुत्रेणतापसेनत्वमपिपुत्रशोकान्मरिष्यसीतिशापेदत्तेतंप्रतिदशरथस्योक्तिः अदृष्टपुत्रमुखपंकजशोभेमयिभगवतात्वयापातितः अयंशापोपिसानुग्रहोभवति खलुनिश्चितंइंधनैरिद्धोदीप्तोदहनः कृषियोग्यांक्षितिंदहन्नपिबीजांकुरजननींकरोतीतिदृष्टांतः परेतिपरस्यदशरथस्यानिष्टप्रापणरूपंयदिष्टंतस्यानवाप्तिरर्थात्तापसस्येत्यर्थः कुतस्तत्राह स्वतइति नियोक्तुःप्रेषयितुःयंप्रतीति मौढ्यंमूढत्वं एवंविधायां

शापोप्यदृष्टतनयाननपद्मशोभेसानुग्रहोभगवतामयिपातितोयं कृष्यांदहन्नपिखलुक्षितिमिंधनेद्धोबीजप्ररोहजननींदहनःकरोति अत्रपरानिष्टप्रापणरूपेष्टानवाप्तिः स्वतोऽनिष्टस्यापिमुनिशापस्यमहापुरुषार्थपुत्रलाभावश्यंभावगर्भतयादशरथेनेष्टत्वेनसमर्थितत्वात् यत्रकेनचित्स्वेष्टसिद्ध्यर्थंनियुक्तेनान्येननियोक्तुरिष्टमुपेक्ष्यस्वस्यैवेष्टंसाध्यतेतत्रापीष्टानवाप्तिरूपमेवविषमं यथा यंप्रतिप्रेषितादूतीतस्मिन्नेवलयंगतासख्यःपश्यतमौढ्यमेवविपाकंवाविधेरमुं तस्मिन्नेवलयंगतेतिनायकेदूत्याःस्वार्थदर्शितं यथावा नपुंसकमितिज्ञात्वाप्रियायैप्रेषितंमनः तत्तुतत्रैवरमतेहताःपाणिनिनावयं एतानिसर्वथैवेष्टानवाप्तेरुदाहरणानि कदाचिदिष्टावाप्तिपूर्वकंतदनवाप्तिर्यथा मदीयेवरदराजस्तवे भानुर्निशासुभवदंघ्रिमयूखशोभालोभात्स्वतापयकिरणोत्करमाप्रभातं तत्रोद्धृतेहुतवहात्क्षणलुप्तरागितापंभजत्यनुदिनंसहिमंदतापः यथावा त्वद्वक्त्रसाम्यमयमंबुजकोशमुद्राभंगात्ततस्तुषमपित्रकरोपकूस्या ११मातत्त्वबुद्धेः विधेर्दैवस्य

विपाकंपरिपाकंफलमितियावत् भानुरिति हेहरेभानुःसूर्यःभवच्चरणकिरणशोभायाल्लोभात्स्वीयकिरणसमूहंनिशासुप्रभातपर्यंतमप्रताप्य रात्रौसूर्यकिरणानामग्नौप्रवेशात्तापयित्वातत्रतस्मिन्किरणोत्करेहुतवहादग्नेःसकाशादुद्धृतेसतिरिक्ततादर्शनात् मंदसंतापःसन्क्षणमात्रेणलुप्तरागेनष्टलौहित्येसत्यनुदिनंतापंभजतीत्यन्वयः त्वद्वक्त्रेति हेहरेअयंविधुःपर्वणिपूर्णिमायांअंबुजस्यकोशःकुड्मलःसएवांबुजरूपभांडारगृहंतस्यमुद्रामुकुलीभावो

सुद्वर्णंच तस्यभंगे नात्तागृहीतातन्सुषमातत् शोभायेस्तादृशायेमित्रकराः सूर्यकिरणाः सुहृत्ताणय श्चतेषासुपकृत्यालाभेनत्वद्रूलस्यकांतिंलब्ध्वापिक्रमेणहीय
मानःक्षीयमाणःसन् अभीत्याउपचितांप्रवृद्धांश्रियंआशुनाशोयस्यास्तांशंसतिकथयतीत्यन्वयः अत्रेति आगमसिद्धंतस्माद्दिवाग्निरादित्यं प्रविशतिरात्रावा
दित्यस्तमितिश्रुतिसिद्धं प्रवेशनंतत्कृतंसूर्यकृतंतेषांकिरणानामग्नौप्रतापनरूपंपरिकल्प्यउत्प्रेक्ष्य एवंतेषांकिरणाना मरुणिमानंआरक्तत्वंच अरुणि

लब्ध्वापिपर्वणिविधुःक्रमहीयमानः शंसत्यनीत्युपचितांश्रियमाशुनाशां अत्राद्यश्लोकेसूर्यकिरणानांरात्रिष्वग्निप्रवेशनमागमसि
द्धं सूर्यस्यनिजकिरणेषुभगवच्चरणारुणिमप्रेप्सयातत्कृतंतेषामग्नौप्रतापनंपरिकल्प्य तेषामुदयकालदृश्यमरुणिमानंचततोऽद्भु
तनाराचानामिवाग्निसंतापनप्रयुक्तारुणिमानुवृत्तिंपरिकल्प्य सूर्यस्यमहतापिप्रयत्नेनतात्कालिकेष्टावाप्तिरेवजायतेनसार्वकालि
केष्टावाप्तिरितिदर्शितं द्वितीयश्लोकेचंद्रस्यभगवन्मुखलक्ष्मीं लिप्समानस्यसुहृत्त्वेनमित्रशब्दश्लेषवशात्सूर्यंपरिकल्प्यतत्किरणस्य
कमलमुकुलविकासनंचंद्रानुप्रवेशनंचसुहृत्ताणेभगवन्मुखलक्ष्मीनिधानकोशगृहमुद्रामोचनपूर्वकं ततोगृहीतभगवन्मुखलक्ष्मीक
स्यतयाभगवन्मुखलक्ष्म्या चंद्रप्रसाधनार्थंचंद्रस्पर्शरूपंचपरिकल्प्यैतावतापिप्रयत्नेनपौर्णिमास्यामेवभगवन्मुखसाम्यरूपेष्टप्राप्ति
र्जायतेनसार्वकालिकेतिदर्शितं क्वचिदिष्टानवाप्तावपि तद्वाप्तिभ्रमनिबंधनविच्छित्तिविशेषः यथावा वल्लालक्षोणिपालत्वदहितनगरे
संचरंती किरातीरत्नान्यादायकीर्णान्युरुतरखदिरांगारशंकाकुलांगी ९ मानुरुक्तिरूपंपरिकल्प्यइतिदर्शितमित्यन्वयः एवमग्रेपिसुहृत्त्वेन
सूर्यंपरिकल्प्य तत्किरणस्यचंद्रानुप्रवेशंचशास्त्रसिद्धंसुहृत्ताणेर्यथोक्तविशेषणविशिष्टस्यचंद्रस्पर्शरूपंचपरिकल्प्यइतिदर्शितमित्यन्वयः वल्लालेति
हे एतन्नामकभूपालत्वच्छत्रुनगरेसंचरंतीभिल्लीप्रकीर्णानिरत्नान्यादायउरुतरामहतीयाखदिरांगारस्यशंकाभ्रांतिस्तयाव्याकुलांगी ॥ ॥ राम
६४

तदुपरिश्रीखंडकाष्ठशकलंक्षिप्त्वामुकुलीभूतनेत्राफूत्कारंकुर्वतीसतीश्वासपरिमलेनप्रसक्तैरागतैर्भ्रमरसमूहैर्धूमशंकांकरोतीत्यन्वयः प्रभूतेति बहुले
त्यर्थः एतेषुचसर्वेषूत्पाद्योत्पादकभावरूपसंबंधगर्भेषुप्रभेदेषुकार्यकारणयोः क्वचिद्विलक्षणगुणशालित्वेनानुरूप्याभावात्क्वचिच्चेष्टोत्पादकत्वेनाभि
मतस्यकारणस्येष्टानवाप्त्यनिष्टावाप्तिरूपकार्येणानुरूप्याभावात् सामान्यलक्षणसमन्वयोबोध्यः इत्यलंकारचंद्रिकायांविषमालंकारः समेति
ति अनुरूपयोरित्यनंतरसंबंधस्येतिशेषः परस्परमनुरूपयोः संबंधस्यवर्णनंसमंनामालंकारः सद्मस्थानं शशिखंडमंडनं चंद्रकलाभूषणंहरं ॥

क्षिप्त्वाश्रीखंडखंडंतदुपरिमुकुलीभूतनेत्राधमंतीश्वासामोदप्रसक्तैर्मधुकरपटलैर्धूमशंकांकरोति अत्रप्रभूताग्निसंपादनोद्योगात्तत्सं
पादनालाभेऽपितल्लाभः भ्रमोपन्यासमुखेननिबद्धः सम स्याद्वर्णनंयत्रद्वयोरप्यनुरूपयोः स्वानुरूपंकृतंसद्महारेणकुचमंडलं प्रथम
विषमप्रतिद्वंद्वीदंसमं यथावा कौमुदीवतुहिनांशुमंडलंजान्हवीवशशिखंडमंडनं पश्यकीर्त्तिरनुरूपमाश्रितात्वांविभातिनरसिंह
भूपते चित्रंचित्रंबतबतमहच्चित्रमेतद्धिचित्रंजातोदैवादुचितघटनासंविधातापिधाता यन्निबानांपरिणतफलस्फीतिरास्वादनीया
यच्चैतस्याःकवलनकलाकोविदःकाकलोकः पूर्वस्मिन्तिपर्यवसायीदंनिंदापर्यवसायीतिभेदः सारूप्यमपिकार्यस्यकारणेनसमंविदुः
नीचप्रवणतालक्ष्मीजलजायास्तवोचिता इदंद्वितीयविषमप्रतिद्वंद्विसमं यथावा दवदहनादुत्पन्नोधूमोघनतामवाप्यवर्षैस्तं यच्छमय
तितद्युक्तंसोपिचदवमेवनिर्दहति ९ चित्रमिति अत्रचित्रबतशब्दयोर्वीप्साविस्मयातिशयद्योतनाय परिणतंपक्वंस्फीतिःसमृद्धिः एतस्याःफ
लसमृद्धेःकवलनकलाभक्षणचातुर्यंतत्रकोविदःपंडितः सारूप्यमपीति कार्यस्यकारणेनसारूप्यमपिसमालंकारः नीचेति नीचप्रवणतानीचास
क्तता जलजायाः समुद्ररूपजलाज्जातायाः उचितेति जलस्यनादृशत्वादितिभावः दवेति घनतांमेघरूपतांवर्षैर्जलवर्षणैः शमयतिनाशयति हिम

स्मात्सोपिदवदहनोपिदवमेव स्वोत्सादकंविनिर्दहति

नथाच कारणस्य स्वोत्पादकनाशकत्वात्कार्यस्यापि धूमस्य तथात्वमुचितमित्यर्थः आदाविति विरहिण्या इयमुक्तिः सोयंचंद्रः मांकिरणैस्तपतीत्येतत्प्राप्तंन्यायप्राप्तमित्यर्थः सकः यआदौहालाहलरूपेणहुतभुजाग्निनादत्तोहस्तावलंबोयस्यसः निटिलेललाटेतत्संबंधिमहसानेत्राग्निना बद्धयामैत्र्यानिरूढः प्रसिद्धः प्रौढोयुवाराहोमुखसंबंधिभिर्विषैरंतरंगीकृतः ग्रहणकालेसंपर्कातिशयादंतरंगतांप्रापितइत्यर्थः अत्रकार्यस्य तापस्यकारणीभूतचंद्रगतदुष्टसंसर्गानुरूपत्वं भेदान्तरमाह विनेति अनिष्टंविनायमर्थकर्त्तुमुद्यतस्तत्सिद्धिरपिसममित्यनुवृत्त्यायोज्यं यदर्थमितिश

यथावा आदौहालाहलहुतभुजादत्तहस्तावलंबोबाल्येशंभोर्निटिलमहसाबद्धमैत्रीनिरूढः प्रौढोराहोरपिमुखवि षेणांतरंगीकृतोयः सोयंचंद्रस्तपतिकिरणैर्मामितिप्राप्तमेतत् पूर्वत्रकारणस्वभावानुरूप्यं कार्यस्यात्रागतुकतदीयदुष्टसंसर्गानुरूप्यमितिभेदः विनानिष्टंचतत्सिद्धिर्यदर्थंकर्तुमुद्यमः युक्तोवारणलाभोयस्यान्नतेवारणार्थिनः इदंसममनिष्टस्याप्यवाप्तिश्चेत्यर्थसंगृहीतस्य त्रिविधस्यापिविषमस्यप्रतिद्वंद्वि इष्टावाप्तिरनिष्टस्याप्रसंगाच्च अत्रगजार्थितयाराजानमुपसर्पंतंतद्दौवारिकैर्योर्मापांप्रतिनर्मवचनमुदाहरणं नचात्रनिवारणमनिष्टमापन्नमित्युदाहरणत्वंशंकनीयम् राजद्वारिक्षणनिवारणंसंभावितमितितदंगीकृत्यप्रवृत्तस्यविषमालंकारोदाहरणेष्विवातर्कितोत्कटानिष्टापत्त्यभावात् किंचयत्रातर्कितोत्कटानिष्टसत्त्वेश्लेषमहिम्नादृष्टार्थत्वप्रतिपत्तिः तत्रापिसमालंकारोऽप्रतिहतएव उच्चैर्गजैरटनमर्थयमानएवत्वामाश्रयन्निहचिरादुषितोस्मिराजन् ॥ ऽेयश्चासावर्थश्चेत्यर्थः युक्तइतिवारणंनिवारणं वारणोगजश्च युक्तोनस्यादपितुस्यादेवेत्यर्थः शोभतइतिक्वचित्पाठः साधुरेव अपिसंगृहीतस्य अपिशब्दसंगृहीतस्य नर्मवचनंपरिहासवचनं अत्रेष्टावाप्तिः श्लेषकल्पिताबोध्या इष्टार्थप्रतीतिरितिइष्टार्थत्वेनप्रतीतिरित्यर्थः अप्रतिहतइति अनिष्टस्येष्टाभिन्नत्वेनज्ञानकालेऽनिष्टत्वेनाप्रतिभासादितिभा

इहत्वन्नगरेउषितोस्मिवासंकृतवानस्मि तदेव मयार्थ्यमानमेव उच्चाटनंदूरनिरसनमेवउच्चैर्गजैरटनंप्रतिमांलंभयसेप्रापयसि हियस्मात् महतांसेवाविफलानभवतीतिमुखेस्तुतिः ततोदूरनिरसनरूपार्थांतरपरिग्रहेणविषमालंकारस्फूर्त्यानिंदायां पर्यवसानं एतेनवैषम्यस्यनिंदारूपस्य व्याजस्तुतिविषयत्वेनतयाऽपवादइतिनिरस्तं विषमस्यनिंदामूलत्वेनतद्रूपत्वाभावादिति इष्टार्थावाप्तिसत्त्वेपिवास्तविकेष्टार्थप्राप्तिसत्त्वेपि नक्षतिरिति अनिष्टप्रतीतेराभासरूपत्वेनापर्यवसानादितिभावः शस्त्रमिति तदेव नखल्वेव एकपदत्वेनेत्युपलक्षणेतृतीया एकपदत्वोपलक्षितं यद्धस्तकस

उच्चाटनंत्वमपिलंभयसेतदेवमामद्यनैवविफलामहतांहिसेवा अत्रयद्यपिव्याजस्तुतौस्तुत्यानिंदाभिव्यक्तिविवक्षायांविषमालंकारः तथापिप्राथमिकस्तुतिरूपवाच्यविवक्षायांसमालंकारोननिवार्यते एवंयत्रेष्टावाप्तिसत्त्वेपिश्लेषवशादसतोनिष्टार्थस्यप्रतीतिस्तत्रापिसमालंकारस्यनक्षतिः यथा शस्त्रंनखलुकर्त्तव्यमितिपित्रानियोजितः तदेवशस्त्रंकृतवान्पितुराज्ञानलंघिता अत्रपितुराज्ञानलंघितेत्यनेनविरोधालंकाराभिव्यक्त्यर्थंनखल्वित्यत्रपदद्वयविभागात्मकरूपांतरस्यापिविवक्षायाःसत्त्वेपिनखलुनातीतिनखल्वित्येकपदेनवस्तुसदर्थांतरपररूपांतरमादायसमालंकारोप्यस्त्येव श्लेषलब्धासदिष्टावाप्तिप्रतीतिमात्रेणापिगतमुदाहरणं यथा सत्यंतपःसुगत्यैयत्तत्वांबुपुरविप्रतीक्षसत् अनुभवतिस्रुगतिमब्जंत्वसदज्जन्मनिसमस्तकमनीयम् ॥ दर्थांतरपरंरूपांतरमित्यर्थः अर्थांतरंचवास्तविकंपदव्युत्पत्तिकथनेनदर्शितमेव श्लेषलब्धेति श्लेषेणलब्धा असतीवस्तुतोऽविद्यमानायादृष्टावाप्तिस्तत्प्रतीतिमात्रेणसमालंकारोदाहरणमपिगतं अधिगतं मात्रपदेना निष्टावाप्तिप्रतीतिव्यवच्छेदः युक्तोवारणलाभोयमित्यत्रकिंचिदनिष्टस्यउच्चैरित्यत्रचोत्कटानिष्टस्यप्रतीतिसत्त्वादुदाहरणांतरमाह यथेति नायिकांप्रतिनायकस्योक्तिः हेतन्वितपःशोभनगत्यैवभवतीतिसत्यंयद्यस्मादब्जंकमलंअंबुपुरेलेपुरविप्रती

कु॰ नं॰ चं॰ टी॰ ६६

स्तेतादृशं सत्त्वात पःकृत्वात्वत्सदृरूपे जन्मनि समस्तेभ्यः कमलेभ्यः कमनीयं सुंदरं सत्क्रगतिं शोभनां गतिमनुभवतीत्यन्वयः अन्यकमलस्योत्तम लोकरूपगतिप्राप्तयेतपस्यतस्तद्लाभेपिशोभनगमनस्यगतिशब्दश्लेषवलादिष्टत्वेनप्रतीतेरिष्टावाप्तिप्रतीतिमात्रेनत्वनिष्टप्रतिभासोपीति ॥ इत्यलंकारचंद्रिकायां समालंकारः विचित्रमिति फलेच्छया विपरीतः प्रयत्नश्चेद्विचित्रंनामालंकारः इष्टविपरीताचरणमिति यावत् नमंतीति नम्री भवंतीत्यर्थः समुन्नतिं उच्चतां मलिनयितुमिति मलिनीकर्त्तुमित्यर्थः विमलयति निर्मलीकरोति जगंतित्रिभुवनानि मित्रंसुहृत् मित्रः सूर्य

विचित्रंतत्प्रयत्नश्चेद्विपरीतः फलेच्छया नमंतिसंतस्त्रैलोक्यादपिलब्धुंसमुन्नतिं यथावा मलिनयितुंखलवदनंविमलयतिजगंति देवकीर्त्तिस्ते मित्राल्हादंकर्तुंमित्रायद्रुह्यतिप्रतापोपि । अधिकंपृथुलाधाराद्आधेयाधिक्यवर्णनं ब्रह्मांडानिजलेयत्रतत्रमांतिनते गुणाः अत्रयत्रमहाजलौघेऽनंतानिब्रह्मांडानिबुद्बुदकल्पानीत्याधारस्यातिविशालत्वंप्रदर्श्यतत्रनमांतीत्याधेयानांगुणानामाधिक्यंवर्णितं यथावा युगांतकालप्रतिसंहृतात्मनोजगंतियस्यांसविकाशमासत तनौममुस्तत्रनकैटभद्विषस्तपोधनाभ्यागमसंभवामुदः पृथ्व्याधेयाद्यदाधाराधिक्यंतदपितन्मतं कियद्वाक्ब्रह्मयत्रैतेविश्राम्यंतिगुणास्तव अत्रैतइतिप्रत्यक्षदृष्टमहावैभवत्वेनोक्तानांगुणानांविश्राम्यतीत्यसंबाधावस्थानोक्त्याधारस्यवाग्ब्रह्मणआधिक्यंवर्णितं ॥९७॥ इतिविचित्रालंकारः अधिकमिति पृथुलादाधेयापेक्षयाविशालाद्आधारादाधेयस्याधिक्यवर्णनमेकोधिकालंकारः युगांतेति युगांतकालेप्रलयेप्रतिसंहृतः स्वस्मिन्लयंप्रापितआत्मास्वविलासरूपः प्रपंचोयेनतादृशस्यकैटभद्विषः श्रीकृष्णस्ययस्यांतनौजगंतिभुवनानि विकाशसहितं यथास्यात्तथा आसतस्थितानितत्रतस्यांतनौ तपोधनस्यनारदस्याभ्यागमात्संभवोयासांतामुदःप्रीतयोनममुरित्यन्वयः पृथ्वितिविशालाद्आधेयाद्यदाधारस्याधिक्यंतदप्यधिकं कियदिति अपरिमितमित्यर्थः वाक्शब्दएवब्रह्म इयंचपर

अहोइति माति संमाति मातुमशक्यः अपरिमितः अत्रभुवनत्रयोदरे नन्वाधारयोः शब्दब्रह्मभुवनोदरयोरप्रस्तुतत्वेनाप्रशंसनीयत्वात्तदाधिक्यवर्णनमयुक्तमित्याशंक्याह अत्रेति नचात्राप्रस्तुतप्रशंसाशंकनीया प्रस्तुतस्याप्यभिधानादिति इत्थंचाधाराधेयान्यतरस्यतनोरप्याधिक्यवर्णनमिति सामान्यलक्षणंबोध्यम् इत्यधिकालंकारः अल्पमिति यदिसामान्येनपुंसकं स्वापेक्षयासूक्ष्मादाधेयादाधारस्यसूक्ष्मतायत्तदल्पंनामालंकारः मणीति

यथावा अहोविशालंभूपालभुवनत्रितयोदरं मातिमातुमशक्योपियशोराशिर्यदत्रते अत्रयद्यप्युदाहरणद्वयेपिकियद्वाग्ब्रह्मेति अहोविशालमितिचाधारयोःप्रशंसाक्रियते तथापि तनुत्वेनसिद्धवत्कृतयोः शब्दब्रह्मभुवनोदरयोर्गुणयशोराश्यधिकरणत्वेनाधिकत्वप्रकल्प्यैवप्रशंसाक्रियतइतितत्प्रशंसाप्रस्तुतगुणयशोराशिप्रशंसायामेवपर्यवस्यति । अल्पंतुसूक्ष्मादाधेयाद्यदाधारस्यसूक्ष्मता मणिमालोर्मिकातेऽद्यकरेजपवटीयते अत्रमणिमालामयोर्मिकातावदंगुलिमात्रपरिमितत्वात्सूक्ष्मासापिविरहिण्याः करेकंकणवत्प्रवेशितातस्मिन्जपमालावल्लंबतइत्युक्त्यानतोपिकरस्यविरहकार्श्यादतिसौक्ष्म्यंदर्शितं यथावा यन्मध्यदेशादपितेसूक्ष्मंलोलाक्षिदृश्यते मृणालसूत्रमपितेनसमातिस्तनांतरे अन्योन्यंनाम यत्रस्यादुपकारः परस्परं त्रियामाशशिनाभातिशशीभातित्रियामया यथावा यथोर्ध्वाक्षः पिबत्यंबुपथिकोविरलांगुलिः तथाप्रपापालिकापिधारांवितनुतेतनुं ॥९८॥ मणिपंक्तिरूपाऊर्मिका अंगुलीयकंतेकरेऽद्यविरहावस्थायांजपमालायतइत्यर्थः वटशब्दस्यगुटिकापर्यायत्वात् अतिसूक्ष्मता आधेयभूतमालापेक्षयापिसूक्ष्मता यदिति हेचंचलाक्षितवमध्यभागादपियत्सूक्ष्मंदृश्यतेतत्मृणालसूत्रमपितवस्तनयोरंतरेमध्येनमातीत्यन्वयः इत्यल्पालंकारः अन्योन्यमिति यत्रपरस्परमुपकारःस्यात्तत्रान्योन्यंनामालंकारः त्रियामारात्रिः यथेति ऊर्ध्वाक्षःऊर्ध्वनयनः प्रपापालिका प्रपादाताधिकृताकाचिद्वनिता धारांजलधारांतनुंसूक्ष्माम् ॥ ॥

अत्रेति प्रपापालिकायाः पथिकेनोपकारः कृत इत्यन्वयः स्वासक्त्येत्यादि प्रपापालिकाया विशेषणं संपादनेन करणभूतेन एवं प्रपापालिकयापि पथिक
स्योपकारः कृत इत्यन्वयः यत्तु स्वमुखावलोकनमभिलषंत्या इत्यत्र स्वशब्दस्य प्रपापालिकाबोधकत्वमेव न्याय्यं न पान्थबोधकत्वं यद्विशेषणघट
कत्वेन स्वनिजादिशब्दा उपात्तास्तद्बोधका इति व्युत्पत्तिरिति कैश्चिदुक्तं तदयुक्तं मुख्यविशेष्यविशेषणघटकस्यैव स्वनिजादिशब्दस्य मुख्यविशेष्यमात्रगामि
त्वव्युत्पत्तेः यथा देवदत्तस्य पुत्रः स्वमातृभक्त इत्यादौ स्वशब्दस्य तादृशपुत्रगामित्वं न तु गुणभूतदेवदत्तगामित्वं अत एवैतादृशस्थल एव निजतनुस्व

अत्र प्रपापालिकायाः पथिकेन स्वासक्त्या पानीयदानव्याजेन बहुकालं स्वमुखावलोकनमभिलषंत्या विरलांगुलिकरणतश्चिरं पानी
यदानानुवृत्तिसंपादनेनोपकारः कृतः तथा प्रपापालिकयापि पानीयपानव्याजेन चिरं स्वमुखावलोकनमभिलषतः पथिकस्य धारा
तनूकरणतश्चिरं पानीयपानानुवृत्तिसंपादनेनोपकारः कृतः अत्रोभयोर्व्यापाराभ्यां स्वस्वोपकारसद्भावेपि परस्परोपकारोपि न निवार्यते
विशेषः ख्यातमाधारं विनाप्याधेयवर्णनं गतेपि सूर्ये दीपस्थास्तमश्छिंदंति तत्कराः यथा वा कमलमनंभसि कमले कुवलये तानि
कनकलतिकायां सा च सुकुमारसुभगेत्युत्पातपरंपराकेयं अत्राद्ये सूर्यस्य प्रसिद्धाधारस्याभावेपि तत्कराणामन्यत्रावस्थितिरुक्ता
द्वितीये त्वंभसः प्रसिद्धाधारस्याभावेपि कमलकुवलययोरन्यत्रावस्थितिरुक्ता क्वचित्प्रसिद्धाधाररहितानामाधारांतरनिर्देशं विनैवाप्रलयमव

च्छलावण्यवापीसंभूतांभोजशोभां विदधदभिनवो दंडपादो भवान्या इत्यत्राभवन्मतयोगत्वं दूषणमुदाहृतं मम्मटभट्टैः काव्यप्रकाशिकायां अन्यत्र तु
नस्वविशेष्यगामित्वनियमः स्वाश्रितानां विप्राणामयं पालकः स्वाज्ञाकारिणां भृत्यानामयं कल्पवृक्ष इत्यादौ व्यभिचारात् न चैवं स्वदाररतानां विप्राणामहं भ
क्त इत्यत्र मदीयदाररतानामिति प्रतीतिः स्यादिति वाच्यम् तात्पर्यस्य नियामकत्वेनापत्त्यभावादिति इत्यन्योन्यालंकारः विशेष इति ख्यातं प्रसिद्धम



तदुक्तं विना प्रसिद्धमाधारमाधेयस्य व्यवस्थितिरिति छिंदंति नाशयंति तत्कराः सूर्यकिरणाः रात्रावादित्यस्याग्नौ प्रवेशश्रवणाद्दीपस्थत्वं कमलमिति
अत्र कमलत्वादिना मुखादेरध्यवसानं बोध्यम् कुवलये नेत्रे एतानि कमलकुवलयानि कनकलतारूपायां कामिन्यां सा च कनकलतिका च निर्देशः
कथनं आप्रलयं प्रलयपर्यंतं दिवमिति दिवमुपयातानामपि येषामनल्पगुणगणयुक्ता गिरः आकल्पं कल्पपर्यंतं जगंति भुवनानि रमयंतीत्यन्व

यथा दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषां रमयंति जगंति गिरः कथमिव कवयो न ते वंद्याः अत्र कवीनामभावेपि तद्गि
रामाधारांतरनिर्देशं विनैवाप्रलयमवस्थितिर्वर्णिता विशेषः सोपि यदेकं वस्त्वनेकत्र वर्ण्यते अंतर्बहिः पुरः पश्चात्सर्वदिक्ष्वपि सैव
मे यथा वा हृदयान्नापयातोसि दिक्षु सर्वासु दृश्यसे वत्स राम गतोसीति संतापेनानुमीयसे किंचिदारंभतोशक्यवस्त्वंतरकृतिश्च सः त्वां
पश्यता मया लब्धं कल्पवृक्षनिरीक्षणं यथा वा स्फुरदद्भुतरूपमुत्प्रतापज्वलनं त्वां सृजतानवद्यविद्य विधिना ससृजे नवो मनोभूर्भु
वि सत्यसविता बृहस्पतिश्च अत्राद्ये राजदर्शनारंभेण कल्पवृक्षदर्शनरूपाशक्यवस्त्वंतरकृतिः द्वितीये राजसृष्ट्यारंभेण मनोभवादि
सृष्टिरूपाशक्यवस्त्वंतरकृतिः स्याद्व्याघातोन्यथाकारि तथाकारि क्रियेत चेत् यैर्जगत्प्रीयते हंति तैरेव कुसुमायुधः यद्यत्साधन
त्वेन लोके अवगतं तत्केनचित्तद्विरुद्धसाधनं क्रियेत चेत्स व्याघातः ॥ यः प्रभेदांतरमाह यदीति तृतीयं प्रकारमाह किंचिदिति किंचित्पदार्थो
रंभेणाशक्यस्य वस्त्वंतरस्य कृतिः करणं च सः विशेषः त्वामिति प्रभुं प्रति याचकोक्तिः स्फुरदिति उत्कटः प्रतापरूपो ज्वलनोग्निर्यस्येत्यर्थः उक्तविशेषणं
त्वां सृजता विधिना भुवि नवो मनोभवादिः ससृजे सृष्ट इति सत्यमित्यन्वयः अत्र चोक्तभेदत्रयान्यतमत्वं सामान्यलक्षणं बोध्यम् इति विशेषालंकारः
स्यादिति तथाकारि तत्कार्यसाधनं वस्तु अन्यथाकारि तत्कार्यविरुद्धकार्यसाधनं चेत् क्रियेत तदा व्याघातोऽलंकारः स्यादित्यर्थः यैरिति यैः कटाक्षविभ्रमादिर्जगत्प्री

विरूपाक्षस्यहरस्य जयिनीः विजयकारिणीः स्तुवेस्तौमि भेदांतरमाह सौकर्येणेति कारणस्यानुगुण्याधिक्येनेत्यर्थः निबद्धा कविवर्णिता कार्यविरोधि
नी पराभिमतकार्यविरुद्धा दयेति दिग्विजयायप्रस्थितंराजानंप्रतियुवराजस्योक्तिः बालइत्यतोमयिदयायौवराज्येस्थापनरूपाचेन्नदानस्मादेवहेतो
रहंतवापरित्याज्यएव किंतु सेनसहनेतव्यइत्यर्थः अर्थादिति हेतौपंचमी अन्वयश्चास्यसमर्थ्यतेइत्यनेन अन्येन वक्त्रा जैत्रेति जयसाधने

यद्यायत्साधनतयाकेनचिदुपात्तंतदन्येनतत्प्रतिद्वंद्विनातद्विरुद्धसाधनंक्रियेतचेत्सोपिव्याघातः तत्राद्यउदाहृतः द्वितीयं यथा दृशादग्धंमन
सिजंजीवयंतिदृशैवयाः विरूपाक्षस्यजयिनीस्तास्तुवेवामलोचनाः सौकर्येणनिबद्धापिक्रियाकार्यविरोधिनीदयाचेद्बालइतिमय्यपरि
त्याज्यएवते कार्यविशेषनिष्पादकतयाकेनचित्संभाव्यमानादर्थादन्येनकार्यविरोधिक्रियासौकर्येण समर्थ्यते चेत्सोपिव्याघातः कार्य
विरुद्धक्रियायांसौकर्यंकारणस्यसुतरांतदानुगुण्यं यथा जैत्रयात्रोन्मुखेनराज्ञायुवराजस्यराज्यएवस्थापनेयत्कारणत्वेनसंभावितं
बाल्यंतेनस्युततद्विरुद्धस्यसहनयनस्यैवकारणतयायुवराजेनपरित्यागस्यायुक्तत्वदर्शयतासमर्थ्यते यथावा लुब्धोनविसृजत्य
र्थंनरोदारिद्र्यशंकया दातापिविसृजत्यर्थंतयैवननुशंकया अत्रपूर्वोत्तरार्द्धेपक्षप्रतिपक्षरूपेकयोश्चिद्वचनेइतिलक्षणानुगतिः। गुंफः
कारणमालास्याद्यथाप्राक्क्रांतकारणैः नयेनश्रीः श्रियात्यागस्त्यागेनविपुलंयशः ९९ त्यर्थः लुब्धइति तयैवशंकया दारिद्र्यशंकयैव ननुनि

श्चितं अत्रपूर्वार्धेलुब्धस्यदानाभावसाधकत्वाभिमतदारिद्र्यशंकारूपपूर्वपक्षनिरूपणंदातुस्तुसैवविरुद्धदानसाधकत्वे संमतेति पूर्वविरुद्धपक्षनिरूपण
मुत्तरार्द्धे यद्यपिदारिद्र्यस्यतात्कालिकत्वेनजन्मांतरीयत्वेनचशंकाभिन्नातथाप्यभेदाध्यवसायान्नलक्षणासमन्वयइतिबोध्यम् सामान्यलक्षणं पूर्व 
वदन्यतमघटितमनुसंधेयमितिदिक् इतिव्याघातालंकारः गुंफइति रचनेत्यर्थःकेस्तत्राह यथेति प्राक्चप्रांतंचप्राक्प्रांते ते अनतिक्रम्येति 

यथाप्राक्क्रांतंयानिकारणानितैः पूर्वपूर्वप्रतिकारणैरुत्तरोत्तरंप्रतिकारणैश्चेत्यर्थः एवंचोत्तरोत्तरेत्यादिव्युत्क्रमेणाभिधानमुदाहरणक्रमानुरोधेनेति
ज्ञेयं इतिकारणमाला गृहीतेति वक्ष्यमाणयागृहीतमुक्तरीत्यानिबद्धार्थपंक्तिरेकावलिरलंकारः नेत्रइति तस्यभूभुजइतिसर्वत्रसंबध्यते दोस्तंभयोर्भु
जस्तंभयोर्दोलितमांदोलनंययोस्तौ दोलनाविति पाठेदोलादोलनंययोरस्तीति विग्रहः रत्नमुकुरोरत्नदर्पणः दिक्कालेति दिक्कालात्माभिस्तुल्यायस्याका
शस्यविभुता यश्चतत्राकाशेविशेषेणद्योततेसूर्यः यत्रचचंद्रेअमुष्यसूर्यस्यकिरणाअमृतरूपाभवंति सचचंद्रोयासामपांराशेः समुद्रादभूत् यश्चा

उत्तरोत्तरकारणभूतपूर्वपूर्वैः पूर्वपूर्वकारणभूतोत्तरोत्तरैर्वावस्तुभिः कृतोगुंफः कारणमाला आद्योदाहृता द्वितीयोयथा भवंतिनरकाः
पापात्पापद्दारिद्र्यसंभवं दारिद्र्यमप्रदानेनतस्माद्दानपरोभवेत् गृहीतमुक्तरीत्यार्थश्रेणिरेकावलिर्मता नेत्रेकर्णांतविश्रांतेकर्णौदो
स्तंभदोलिनौ दोस्तंभौजानुपर्यंतप्रलंबनमनोहरौ जानुनीरत्नमुकुराकारेतस्यहिभूभुजः उत्तरोत्तरस्यपूर्वपूर्वविशेषणभावः पूर्वपू
र्वस्यउत्तरोत्तरविशेषणभावोवागृहीतमुक्तरीतिः तत्राद्यःप्रकारउदाहृतः द्वितीयोयथा दिक्कालात्मसमैवयस्यविभुतायस्तत्रवि
द्योततेयत्रामुष्यसुधीभवंतिकिरणाराशेः सयासामभूत् यस्तत्पित्तमुषस्सुयोः स्यहविषेयस्तस्यजीवातवेवोढायद्गुणमेषमन्मथरिपो
स्ताःपांतुनोमूर्त्तयः दीपकैकावलीयोगान्मालादीपकमिष्यते स्मरेणहृदयेतस्यास्तेनत्वयिकृतास्थितिः अत्रस्थितिरितिपदमेकंस्मरे
णतस्याहृदयेस्थितिःकृता हृदयेनत्वयिस्थितिःकृतेत्येवंवाक्यद्वयान्वयिअतोदीपकं ९९ शिस्तासामपांपित्तंभवति शुचिरग्निस्तंभतिको

शात् यश्चयजमानउषस्सुप्रातःकालेषुअस्यवन्हेर्हविषेहविर्दानायभवति यश्चवायुःप्राणरूपस्तस्ययजमानस्यजीवातवेजीवनौषधायभवति
यस्याश्चपृथिव्यागुणांगंधएषावायुर्वोढाताएतामन्मथरिपोर्हरस्याष्टौमूर्त्तयोवोयुष्मान्पात्वित्यन्वयः इत्येकावली मालादीपकमिति मालादीप

एकमितिवाक्यद्वयान्वयीत्यनेनान्वितं अतइति एतावन्मात्रेणदीपसादृश्याद्दीपकंनतुप्रागुक्तदीपकालंकारः प्रकृताप्रकृतानांसादृश्यस्यागम्यत्वेतदंगीका
रादितिभावः संग्रामेति कोदंडेनधनुषाशराः समासादिताःशरैःशत्रुमस्तकंसमासादितंतेनशत्रुमस्तकेनापिभूमंडलंतेनभूमंडलेनत्वंपालकः समासा
दितः भवताकीर्तिरासादिताकीर्त्याचलोकत्रयंसमासादितमित्यनुषंगेणान्वयः इतिमालादीपकं सारइति सारोनामालंकारः तस्याःसुधातः अंतरि

गृहीतमुक्तरीतिसमुद्गावादेकावलीचेतिदीपकैकावलीयोगः यथावा संग्रामांगणमागतेनभवताचापेसमारोपितेदेवाकर्णययेनयेनस
हसायद्यत्समासादितं कोदंडेनशराःशरैररिशिरस्तेनापिभूमंडलं तेनत्वंभवताचकीर्त्तिरतुलाकीर्त्याचलोकत्रये अत्रयेनयेनसह
सायद्यत्समासादितमितिसंक्षेपवाक्यस्थितमेकंसमासादितपदंकोदंडेनशराइत्यादिषुषट्स्वपिविवरणवाक्येषुतत्तदुचितलिंगव
चनविपरिणामेनान्वेतीतिदीपकंशरादीनामुत्तरोत्तरविशेषणभावादेकावलीचेतिदीपकैकावलीयोगः उत्तरोत्तरमुत्कर्षःसारइत्य
भिधीयते मधुरंमधुतस्माच्चसुधातस्याःकवेर्वचः यथावा अंतर्विष्णोस्त्रिलोकीनिवसतिफणिनामीश्वरेसोपिशेतेसिंधोःसोप्ये
कदेशेतमपिचुलकयांकुंभयोनिश्चकार धत्तेखद्योतलीलामयमपिनभसिश्रीनृसिंहसितींद्रत्वत्कीर्त्तेःकर्णनीलोत्पलमिदमपिचप्रे
क्षणीयंविभाति अयंश्लाघ्यगुणोत्कर्षः अश्लाघ्यगुणोत्कर्षोयथा तृणाल्लघुतरस्तूलस्तूलादपिचयाचकः वायुनाकिंननीतो
सौमामयंप्रार्थयेदिति उभयरूपोयथा गिरिर्महान्गिरेरब्धिर्महानब्धेर्नभोमहत् नभसोपिमहद्ब्रह्मततोप्याशागरीयसी ॥ ॥

ति विष्णोरंतः उदरे त्रयाणांलोकानांसमाहारस्त्रिलोकी सोपिविष्णुरपिफणिनांनागानामीश्वरेशेषेशेतेनिद्राति सोपिशेषोपिसिंधोरेकदेशेतिष्ठतीति
शेषः तमपिसिंधुमपिकुंभयोनिः अगस्त्यःचुलकयाचकारपीतवान् अयमगस्त्योपिनभसिगगनेखद्योतशोभांधत्ते इदंगगनमपिप्रेक्षणीयंसुंदरंत्व

तूलःकार्पासः प्रकृतार्थाशायांप्रकृतार्थरूपायामाशायामितिसारालंकारः यथासंख्यमिति क्रमिकाणांक्रमेणोक्तानांपदार्थानां तेनैवक्रमेणान्वयोयथासं
ख्यनामालंकारः शरणमिति कृपणेनधनानियत् नत्यज्यंते तत्किंतानिशरणंप्रपन्नानियच्चनभुज्यंते तत्किं विषवन्मारयंतीतिक्रमेणान्वयः केचिद्वामनाद
यः इतियथासंख्यालंकारः पर्यायइति पर्यायेणक्रमेण अनेकसंश्रयः अनेकाश्रितत्वं तदुक्तं एवंक्रमेणानेकस्मिन्पर्यायइति पद्ममिति रात्रौपद्मसं

अत्रप्रत्ययपर्यंतेषुमहत्वंश्लाघ्यगुणः प्रकृतार्थेत्वाशायामश्लाघ्यगुणः यथासंख्यक्रमेणैवक्रमिकाणांसमन्वयः शत्रुंमित्रं विपत्तिंच
जयरंजयभंजय यथावा शरणंकिंप्रपन्नानिविषवन्मारयंतिवा नत्यज्यंतेनभुज्यंतेकृपणेनधनानियत् असंक्रमालंकारइतिकेचि
द्व्याजह्रुः पर्यायोयदिपर्यायेणैकस्यानेकसंश्रयः पद्मंमुक्त्वागताचंद्रंकामिनीवदनोपमा अत्रैकस्यकामिनीवदनसादृश्यस्यक्रमे
णपद्मचन्द्ररूपानेकाधारसंश्रयणपर्यायः यद्यपिपद्मसंश्रयणंकंठतोनोक्तंतथापिपद्मंमुक्त्वेतितत्परित्यागोक्त्याप्राकृतत्संश्र
याक्षेपेणपर्यायनिर्वाहः अतएवश्रोणीबंधस्त्यजतितनुतांसेवतेमध्यभागः पद्भ्यांमुक्तास्तरलगतयःसंश्रितालोचनाभ्यां धत्ते
वक्षःकुचसचिवतामद्वितीयंतुवक्त्रंत्वद्गात्राणांगुणविनिमयः कल्पितोयौवनेनेत्यत्रपर्यायेकाव्यप्रकाशकृदुदाजहार सर्वत्र
शाब्दःपर्यायोयथा नन्वाश्रयस्थितिरियंतवकालकूटकेनोत्तरोत्तरविशिष्टपदोपदिष्टा प्रागर्णवस्यहृदयेवृषलक्ष्मणोथकंठेधुनावससि

कोचास्यागः अतएवत्यागेनपूर्वसंश्रयणाक्षेपादेव श्रोणीति जघनबंधस्तनुतांकृशतांत्यजतिमध्यभागस्तांसेवते आश्रयति वक्षःस्थलंकुचसचिवतां
कुचसहितत्वंधत्तेवक्त्रंत्वद्वितीयं अत्रपूर्वंवक्षसोऽद्वितीयत्वावगमात्पर्यायसंभवोज्ञेयः अद्वितीयत्वं द्वितीयरहितत्वमनुपमत्वंचैकत्वेनाध्यवसितं ए
वंचोदाहरणद्वयेपिपूर्वाधारसमाश्रयणंगम्यंउत्तराधारसमाश्रयणंशाब्दमिति सर्वत्रसर्वाधारसमाश्रयणाद्धि नन्विति हेकालकूटउत्तरोत्तरविशिष्टमुत्कृष्टं

पदं स्थानं यस्यां ताद्दृशी इयमाश्रयस्थितिस्तवकेनोपदिष्टेत्यन्वयः हृदये अभ्यंतरे अवस इतिशेषः अथानंतरं रुषलक्ष्मणो हरस्य कंठे अधुनापुनरितिसंबंधः ग्रुद्धः संकोचविकासामिश्रितः प्राय इति शैत्यं प्रायोः शेषां वसुधां हेमंते चरित्वा ततो वसंते तरूणां छायासु विश्रम्य संप्रति ग्रीष्मे तिग्मभानौ सूर्ये प्रौढिं प्रागल्भ्यं प्राप्ते सति शनैरपां जलानामंतरभ्यंतरे अयासीत् गच्छतिस्मेत्यर्थः बिंबोष्ठ एवेति बिंबफलसदृशे ओष्ठे रागो रक्तिमा अनुरागश्च एषः रागः अत्र रागस्य भेदेप्यभेदाध्यवसायादेकत्वं यत्तु एकसंबंधनाशोत्तरमपरसंबंधे सत्येव लोके पर्यायपदप्रयोगात् श्रोणी बन्ध इति प्रकाशोदा

सर्वोप्ययं ग्रुद्धपर्यायः संकोचपर्यायो यथा प्रायश्चरित्वा वसुधामशेषां छायासु विश्रम्य ततस्तरूणां प्रौढिं गते संप्रति तिग्मभानौ शैत्यं शनैरंतरपामयासीत् अत्र शैत्यस्योत्तरोत्तरमाधारसंकोचात्संकोचपर्यायः विकासपर्यायो यथा बिंबोष्ठ एव रागस्ते तन्वि पूर्वमदृश्यत अधुना हृदयेप्येष मृगशावाक्षि दृश्यते अत्र रागस्य पूर्वाधारापरित्यागेनाधारांतरसंक्रमणमिति विकासपर्यायः एकस्मिन्यद्यनेकं वा पर्यायः सोपि संमतः अधुना पुलिनं तत्र यत्र स्रोतः पुराजनि यथा वा पुराभूदस्माकं प्रथममविभिन्ना तनुरियं ततो नु त्वं प्रेयान्वयमपि हताशाः प्रियतमाः इदानीं नाथस्त्वं वयमपि कलत्रं किमपरं हतानां प्राणानां कुलिशकठिनानां फलमिदं अत्र दंपत्योः प्रथममभेदः ततः प्रेयसीप्रियतमभावः ततो भार्यापतिभावः इत्याधेयपर्यायः ॥

हनेतथैवदृष्टत्वाच्च बिंबोष्ठ एवेत्यत्र पर्यायकथनमयुक्तमिति केनचिदुक्तं तत्प्रकाश एव बिंबोष्ठ इत्युदाहरणे पर्यायसमर्थनात् भ्रांतप्रलपनमिवोपेक्षणीयं आलंकारिकपरिभाषितानां शब्दानां लोकव्यवहारविसंवादस्याकिंचित्करत्वाच्चेति दिक् भेदांतरमाह एकस्मिन्निति पर्यायेणेत्यनुवर्त्तते एकस्मिन्नाधारे क्रमेण यद्यनेकं भवति सोपि पर्यायालंकारः संमत इत्यर्थः पुरेति अस्माकमित्यस्मदो द्वयोश्चेति द्वयोरपि बहुवचनं पुरेत्यनेन स्थूलोतीतकाल उच्यते तत्रापि प्रथमं तनुरविभिन्नाऽभूत् ततो नु वितर्के त्वं प्रियइदानीं तु त्वं नाथः पतिः वयं भार्याः इतोपरं किमनिष्टमिति शेषः कुलिशं वज्रं अत्र त्वं प्रेयानित्येकवचनेन एकरूप प्रेमपात्रत्वं न्यम्यते प्रियतमा इत्यादि बहुवचनेनैकरूपतद्व्यतिरेक इति बोध्यं इति पर्यायः। परिवृत्तिरिति न्यूनाधिकयोर्मिथः परस्परं विनिमयः परिवृत्तिरलंकारः जग्राहेति कटाक्षपूर्वकं एकं शरं मुक्त्वा रिपोः श्रियं जग्राहेत्यर्थः तस्य चेति प्रवयसोः तिवृद्धस्य जटायुषो गृध्रविशेषस्य स्वर्गं गतवतः किमिव शोचनीयं न किंचित् जर्जरं जीर्णतरं कलेवरं शरीरं तस्य व्ययो रावणेन सह

परिवृत्तिर्विनिमयो न्यूनाभ्यधिकयोर्मिथः जग्राहैकं शरं मुक्त्वा कटाक्षात्स रिपुश्रियं यथा वा तस्य च प्रवयसो जटायुषः स्वर्गिणः किमिव शोच्यतेधुना येन जर्जरकलेवरव्ययात्क्रीतमिंदुकिरणोज्ज्वलं यशः परिसंख्या निषिध्यैकमेकस्मिन्वस्तुयंत्रणं स्नेहक्षयः प्रदीपेषु न स्वांतेषु नतभ्रुवां यथा वा विलंघयंति श्रुति वर्त्म यस्या लीलावतीनां नयनोत्पलानि बिभर्त्ति यस्यामपि वक्रिमाणमेको महाकाल जटार्धचंद्रः आद्योरा हरणे निषेधः शाब्दः द्वितीये त्वार्थः विरोधे तुल्यबलयोर्विकल्पालंकृतिर्मता सद्यः शिरांसि चापान्वा नमयंतु महीभुजः॥ अत्र संधिविग्रहप्रमाणप्राप्तयोः शिरश्चापनमनयोर्युगपदुपस्थितयोर्युगपत्कर्तुमशक्ययोर्विकल्पः यथा वा पतत्यविरतं वारि नृत्यंति च कलापिनः। अद्य कांतः कृतांतो वा दुःखस्यांतं करिष्यति प्रियसमागमश्च मरणमाशंसनीयं मरणे तु न प्रियसमागमसंभव इति तयोराशंसायां विकल्पः बहूनां युगपद्भावभाजां गुंफः समुच्चयः नश्यंति पश्चात्पश्यंति त्रस्यंति च भवद्द्विषः अविरोधेन संभावितयौगपद्यानां नानाशब्दानां गुंफनं समुच्चयः

युद्धे त्यागस्तस्माद्यशः क्रीतं शरीरं दत्त्वा यशो गृहीतमित्यर्थः इति परिवृत्त्यलंकारः परिसंख्येति एकं वस्तु प्रतिषिध्यापरस्मिन्वस्तुनो नियंत्रणं नियमनं परिसंख्यालंकारः स्नेहेति स्नेहस्तैलादिस्निग्धद्रव्यं अनुरागश्च स्वांतेषु चित्तेषु विलंघयंतीति यस्यामुज्जयिनीपुर्यां श्रुतिः कर्णः वेदश्च वर्त्म मार्गं वक्रिमाणं कौटिल्यं वक्राकारतां च महाकाल इति तत्रैव रव्यातं शिवलिंगं इति परिसंख्यालंकारः संधिविग्रहप्रमाणेति संधिविग्रहयोः कर्त्तव्यताबोधकप्रमाणेत्यर्थः इति विकल्पः बहूनामिति युगपद्भावो

हेराजन्तवविद्विषांमंदिरेशून्येपिचिरंतनः प्रणयोयस्याः सैवराज्यस्यस्थितिर्मर्यादास्तीतिशेषः यतोद्वारंखड्गिभिर्गंडकाख्यपशुभिरेवखड्गधारिभिरावृतं बहिरपिभूमयः मदप्रस्विन्नगंडैर्गजैरध्यासिताः अंतःपुरभूमयः विलसन्मणिधारिभिः कंचुकिभिः सर्पैरेवसौविदल्लैरध्यासिताः शयनं तल्पंमहिषीभिर्वेनिताभिरेवमहिषस्त्रीभिराक्रांतमित्यन्वयः इतिपूर्वरूपं संगतेति संगतः स्वसंबद्धोयोन्यः परार्थस्तद्गुणानंगीकारमतद्गुणालंकारमाहुः चिरमिति रागिणि

आक्रांतंमहिषीभिरेवशयनंतत्वद्विद्विषांमंदिरेराजन्सैवचिरंतनप्रणयिनीशून्येपिराज्यस्थितिः संगतान्यगुणानंगीकारमाहुरतद्गुणं चिररागिणिमच्चित्तेनिहितोपिनरज्जसि यथावा गंडाभोगेविरहतिमदैः पिच्छलेदिग्गजानांवैरिस्त्रीणांनयनकमलेष्वंजनानिप्रमार्ष्टि यद्यप्येषाहिमकरकराद्वैतसौवस्तिकीतेकीर्त्तिर्दिक्षुस्फुरतितदपिश्रीनृसिंहक्षितींद्र ननुचान्यगुणेनान्यत्रगुणोदयानुदयरूपाभ्यामुल्लासावज्ञालंकाराभ्यातद्गुणातद्गुणयोः कोभेदः उच्यते उल्लासावज्ञालक्षणयोर्गुणशब्दोदोषप्रतिपक्षवाची अन्यगुणेनान्यत्रगुणोदयतदनुदयौचनतस्यैवगुणस्यसंक्रमणासंक्रमणे किंतुसद्रूपदेशेनसदसच्छिष्ययोर्ज्ञानोत्पत्त्यनुत्पत्तिवत्तद्गुणजन्यत्वेनसंभावितयोर्गुणांतरयोरुत्पत्त्यनुत्पत्ती तद्गुणातद्गुणयोः पुनर्गुणशब्दोरूपरसगंधादिगुणवाची तत्रान्यदीयगुणग्रहणाग्रहणेचरक्तस्फटिकवस्त्रमालिन्यादिन्यायेनान्यदीयगुणेनैवानुरंजनाननुरंजनेविवक्षिते तथैवचोदाहरणानिदर्शितानि मेचप्यवज्ञालंकृतिरतद्गुणश्च ॥ ॥

अनुरागिणि मंजिष्ठादिरंजनद्रव्ययुक्तेच निहितोपित्वंनरज्जसिरक्तोनुरागयुक्तश्चनभवसीतिश्लिष्टं गंडेति हेश्रीमन्नृसिंहाख्यभूपतेएषातवकीर्त्तिः मदैः पिच्छलेपंकिलेदिग्गजानांगंडप्रदेशेयद्यपिविहरति तथावैरिस्त्रीणांनयनकमलेषुस्थितान्यंजनानिप्रमार्ष्टिप्रोंछतितदपितथापिदिक्षुहिमकरस्य चंद्रस्ययत्किरणाद्वैतंतस्यसौवस्तिकीस्वस्तीत्याहेत्यर्थेतदाहेतिमाशब्दादिभ्यष्ठग्वाच्यइत्यनेनठक्प्रत्ययः तत्सदृशीतियावत्स्फुरतिप्रकाशतइत्यर्थः ॥ ७ ॥ 



विशेषाकारेणेति प्राक्लक्षितविशेषरूपेणेत्यर्थः इत्यतद्गुणः प्रागिति परसन्निधिवशात्पूर्वसिद्धस्यस्वगुणस्योत्कर्षः अनुगुणोनामालंकारः नीलोत्पलानि कर्णावतंसीकृतानि कपिरिति कापिशायनंमद्यं इत्यनुगुणः मीलितमितिलक्ष्यनिर्देशः रसइति स्वभावलोहितेचरणेलाक्षायारसोनालक्षिनलालक्षि मल्लिकेति सौमंदुकूलंतद्धारिण्यः इतिमीलितं सामान्यमितिलक्ष्यनिर्देशः विशेषोव्यावर्त्तकधर्मः पद्माकरः रत्नस्तंभेष्विति वालिसूनुना अंगदेनएकेन

विशेषोक्तिर्विशेषावेव कार्याजनिर्विशेषोक्तिः सतिपुष्कलकारणेइतितत्सामान्यलक्षणाक्रांतत्वात् तथाप्युल्लासनद्गुणप्रतिहंद्विनाविशेषाकारेणालंकारांतरतयापरिगणिताविति ध्येयं प्राक्सिद्धस्वगुणोत्कर्षोऽनुगुणः परसन्निधेः नीलोत्पलानि धनेकटाक्षैरतिनीलतां कपिरपिचकापिशायनमदमत्तोवृश्चिकेनसंदष्टः अपिचपिशाचग्रस्तः किंब्रूमोवैकृतंतस्य अत्रकापिलस्यात्यास्वतः सिद्धस्यवैकृतस्यमद्यादिभिरुत्कर्षः मीलितंयदिसादृश्याद्भेदएवनलक्ष्यते रसोनालक्षिलाक्षायाश्चरणेसहजारुणे यथावा मल्लिकामाल्यधारिण्यः सर्वांगीणार्द्रचंदनाः क्षौमवत्योनलक्ष्यंतेज्योत्स्नायामभिसारिकाः अत्राद्येचरणालक्तकरसयोररुणिमगुणसाम्याद्भेदानध्यवसायः द्वितीयोदाहरणेचंद्रिकाभिसारिकाणांधवलिमगुणसाम्याद्भेदानध्यवसायः सामान्यंयदिसादृश्याद्विशेषोनोपलक्ष्यते पद्माकरप्रविष्टानामुखंनालक्षिसुभ्रुवां यथावा रत्नस्तंभेषुसंक्रांतैःप्रतिबिंबशतैर्वृतः लंकेश्वरः सभामध्येनज्ञातोवालिसूनुना मीलितालंकारेएकेनापरस्यभिन्नस्वरूपाणनवभासरूपंमीलनंक्रियते सामान्यालंकारेतुभिन्नस्वरूपावभासेपिव्यावर्त्तकविशेषोनोपलक्ष्यतइतिभेदः मीलितोदाहरणेहिचरणादेर्वस्त्वंतरत्वेनागंतुकंयावकादिनभासते सामान्योदाहरणेतुपद्मानांमुखानांचव्यक्त्यंतरतयाभानमस्त्येव ॥ चरणज्योत्स्नादिनापरस्यलाक्षारसाऽभिसारिकादेःभिन्नरूपेति मुखपद्मादेर्भिन्नस्यस्वरूपस्यावभासेपीत्यर्थः उक्तमेवार्थमुदाहरणारूढतयाविशदयति मीलितोदाहरणेही

तत्प्रतिबिंबानां च व्यक्त्यंतरतयाभानमस्त्येवेत्यनुषंगः केचिदित्यस्याहुरित्यग्रिमेणान्वयः केचित्प्रकाशकारादयः तदुक्तं समेनलक्ष्मणा वस्तु वस्तुनायन्नि
गृह्यते निजेनागंतुना वापि तन्मीलितमिति स्मृतमिति तयोर्मध्ये एवं चेत्यस्येत्यत्र मीलितालंकार इत्यग्रेतनेनान्वयः अपांगेति अपांगस्तरलो ययोस्ते त
रलाः सत्वरोच्चारणात् वक्रा वक्रोक्तिगर्भाः वर्णा यासु ताः गिरो वाक्यरूपाः इतिप्रकारेण मृगदृशामंगके लीलया स्वतः स्वभावात्स्फुरितं प्रकटीभूतं नन

यथा रावणादेहस्य तत्प्रतिबिंबानां च किंत्विदं पद्ममिदं मुखमयं बिंबोयं प्रतिबिंब इति विशेषः परं नोपलक्ष्यते अत एव भेदतिरोधानान्मी
लितं तदतिरोधानेपि साम्येन व्यावर्त्तकानवभासे सामान्यमित्युभयोरप्यन्वर्थता केचित्तु वस्तुद्वयस्य लक्षणसाम्यात्तयोः केनचिद्बली
यसा तदन्यस्य स्वरूपतिरोधाने मीलितं स्वरूपप्रतीतावपि गुणसाम्याद्भेदतिरोधाने सामान्यं एवं च अपांगतरले दृशौ तरलवक्रवर्णा
गिरो विलासभरमंथरा गतिरतीव कांतं मुखं इति स्फुरितमंगके मृगदृशां स्वतो लीलया तदत्र न मदोदयः कृतपदोपि संलक्ष्यते इत्यत्र
मीलितालंकारः अत्र हि दृक्तारल्यादीनां नारीवपुषः सहजधर्मत्वान्मदोदयकार्यत्वाच्च तदुभयसाधारण्यादुत्कृष्टतारल्यादियोगि
नावपुषा मदोदयस्य स्वरूपमेव तिरोधीयते लिंगसाधारण्येन तज्ज्ञानोपायाभावात् मल्लिकामालभारिण्य इत्यादिषु तु सामान्यालंकार
इत्याहुः तन्मते पद्माकरप्रविष्टानामित्यादौ भेदाध्यवसायेपि व्यावर्त्तकास्फुरणे नालंकारांतरेण भाव्यं सामान्यालंकारांतरभेदेन वा ॥

स्मादत्रांगके कृतपदः कृतस्थितिः भेदाध्यवसायेपीति मुखपद्मयोर्भेदावभासेपीत्यर्थः व्यावर्त्तकास्फुरणेन हेतुना अलंकारांतरेणेति स्वरूपातिरोधा
नेन मीलितासंभवात् भेदातिरोधाने न च सामान्यस्याप्यसंभवादिति भावः सामान्येति तथा च गुणसाम्याद्विशेषाग्रह इति सामान्यालंकारसामान्य
लक्षणं विशेषाग्रहश्च क्वचिद्भेदे गृह्यमाणे क्वचिच्चागृह्यमाण इत्याद्यप्रकारांतर्गतिरत्र तन्मते स्यादिति भावः अवांतरभेदेन वेत्यनंतरं भाव्यमित्यनुष



पूर्वस्मिन्निति मीलितं यदि सादृश्यादित्यादि पूर्वोक्तचंद्रालोककृन्मत इत्यर्थः स्वरूपतिरोधाने अपांगतरल इत्यादि स्वरूपतिरोधानस्थले अलंकारांतरेणेत्यादि
स्वरूपतोज्ञायमाने सादृश्याद्भेदाग्रहणं मीलितमित्यंगीकारे प्रथमः पक्षः सादृश्याद्भेदाग्रहणमित्येतावन्मात्रं मीलितलक्षणांगीकारेण द्वितीय इति भावः इ
तिसामान्यं भेदेति वैशिष्ट्यं वैजात्यं उन्मीलितं विशेषकश्च क्रमेणालंकारौ मग्नं भेदाग्रहात्तदंतर्गतं लक्षितानीति संकुचितत्वादिति भावः सामान्यरीत्या सा
मान्यालंकारन्यायेन एवं च वेत्रलताः तुल्यरुचां वधूनां कर्णाग्रतो गंडतलागतानि भृंगाः सहेलं यदि नापतिष्यन् कोवेदयिष्यन्नवचंपकानीत्यपि विशेषको

पूर्वस्मिन्मते स्वरूपतिरोधानेलंकारांतरेण भाव्यं मीलितावांतरभेदेन वा भेदवैशिष्ट्ययोः स्फूर्तावुन्मीलितविशेषकौ हिमाद्रिं त्वद्यशोम
ग्नं सुराः शीतेन जानते लक्षितान्युदिते चंद्रे पद्मानि च मुखानि च मीलितन्यायेन भेदानध्यवसाये प्राप्ते कुतोपि हेतोर्भेदस्फूर्तौ मीलितप्र
तिद्वंद्व्युन्मीलितं तथा सामान्यरीत्या विशेषास्फुरणे प्राप्ते कुतश्चित्कारणात् विशेषस्फूर्तौ तत्प्रतिद्वंद्वी विशेषकः क्रमेणोदाहरणद्वयं त
द्गुणरीत्यापि भेदानध्यवसाये प्राप्तावुन्मीलितं दृश्यते यथा नृत्यद्भर्गाट्टहासप्रसरसहचरैस्तावकीनैर्यशोभिर्धावल्यं नीयमाने त्रिजग
ति परितः श्रीनृसिंहक्षितींद्र नेदृग्यद्येषनाभीकमलपरिमलप्रौढिमासादयिष्यद्देवानां नाभविष्यत्कथमपि कमलाकामुकस्यावबोधः ।

दाहरणं बोध्यं यत्त्वनुमानालंकारेणैवगतार्थत्वान्नानयोरलंकारांतरत्वमिति तदयुक्तं उदाहृतस्थले भेदविशेषस्फूर्त्योर्विशेषदर्शनहेतुक प्रत्यक्षरूपत्वात् अ
थापि स्वकपोलकल्पितपरिभाषयाऽनुमानालंकारतां ब्रूषे तथापि सादृश्यमहिम्ना प्रागनवगतयोर्भेदवैजात्ययोः स्फुरणात्मना विशेषाकारेण मीलितसामान्यप्रति
द्वंद्विना युक्तमेवालंकारांतरत्वं अतद्गुणावृत्तयोरिव विशेषोक्त्यलंकारादित्यलं विस्तरेण नृत्यदिति नृत्यं कुर्वतो भर्गस्य हरस्य योऽट्टहासस्तत्प्रसरस्य समू
हस्य विस्तारस्य वा सहचरैः सदृशैरित्यर्थः ईदृक् कीर्त्तिवद्धवलः एषः कमलाकामुकः नाभीकमलपरिमलस्य प्रौढिं समृद्धिं यदि नासादयिष्यत्तदा आयिष्यदि

कु॰ नं॰ चं॰ टी॰ ८७

यत्तु तद्गुणस्यात्र निर्बोधकत्वात्कथं तत्त्वतिहृद्धित्वमुन्मीलितस्येति तदनुक्तोपालंभरूपत्वादुपेक्ष्यं तद्गुणेन भेदानध्यवसायमात्रस्योक्तत्वात् वाराणसीति तृती
यलोचनादिचिन्हे साधारणेपि सती त्यन्वयः पार्थोर्जुनस्तेन कृतो यः प्रहारस्तेन व्रणोपत्रनादृशमुत्तमांगं शिरः पूर्वत्र स्वाभाविकगुणसाम्यं इह त्वागंतुकगुण
साम्यमिति भेदः इत्युन्मीलितविशेषकौ किंचिदिति किंचिदभिप्रायसहितं गूढमुत्तरं उत्तरंनामालंकारः वेतसीवेतसलता स्फुखेनतरितुं योग्यास्फुतरा।

काकः कृष्णः पिकः कृष्णः को भेदः पिककाकयोः वसंत समये प्राप्ते काकः काकः पिकः पिकः इदं विशेषकस्योदाहरणं अत्र द्वितीयकाकपि
कशब्दौ काकत्वेन ज्ञातः पिकत्वेन ज्ञात इत्यर्थांतरसंक्रमितवाच्यौ यथा वा वाराणसीवासवतां जनानां साधारणे शंकरलांछनेपि पार्थप्र
हारव्रणमुत्तमांगं प्राचीनमीशं प्रकटीकरोति। किंचिदाकूतसहितं स्याद्गूढोत्तरमुत्तरं यत्रासौ वेतसीपांथ तत्रेयं सुतरा सरित् सरित्तर
णमार्गं पृच्छंतं प्रति तं कामयमाना याउत्तरमिदं वेतसीकुंजे स्वाच्छंद्यमित्याकूतगर्भं यथा वा ग्रामेस्मिन्प्रस्तरप्रायेनकिंचित्पांथ विद्यते
पयोधरोन्नतिं दृष्ट्वा वस्तुमिच्छसि चेद्वस आस्तरणादिकं प्रार्थयमानं पांथ प्रत्युक्तिरियं स्तनोन्नतिं दृष्ट्वा स्तुमिच्छसि चेद्वस अविदग्ध
जनप्रायेस्मिन्ग्रामे कश्चिदवगमिष्यतीत्येतादृशप्रतिबंधकं किंचिदपि नास्तीति हृदयं इदमुन्नेयप्रश्नोदाहरणं निबद्धप्रश्नोत्तरं यथा।
कुशलं तस्या जीवति कुशलं पृच्छामि जीवतीत्युक्तं पुनरपि तदेव कथयसि मृतां नु कथयामि या श्वसिति ईर्ष्यामानानंतरमनुतप्ताया नायिकायाः
सखीमागतां प्रति तस्याः कुशलमिति नायकस्य प्रश्नः जीवतीति [illegible] स्या उत्तरं जीवत्याः कुतः कुशलमिति तदभिप्रायः ॥ ७ ॥ ७ ॥

ग्राम इति प्रस्तरप्राये पाषाणबहुले पाषाणतुल्ये च प्रायो बाहुल्य तुल्ययोरिति कोशात् किंचिदास्तरणादिकं समागमप्रतिबंधकं च पयोधरो मेघः
स्तनश्च कश्चिदवगमिष्यति ज्ञास्यतीत्येतादृशं इत्यादिरूपं उन्नेयः कल्प्यः प्रश्नो येन तादृशस्योत्तरस्य ईर्ष्यामानेति ईर्ष्याहेतुकमानेत्यर्थः ॥ राम॰ ८७

अनुतप्तायाः पश्चात्तापयुतायाः प्रश्नोत्तरेति प्रश्नश्च उत्तरांतरं च प्रश्नोत्तरांतरे ताभ्यामभिन्नमुत्तरं चित्रमित्युच्यत इत्यर्थः केदारेति केदाराणां पोषणे रताः
के इति प्रश्नः केदारस्य क्षेत्रस्य पोषणे रता इति तदेवोत्तरं केखेटाः खे आकाशे अटंतीति प्रश्नस्य यदुत्तरं खगः पक्षिण इति तत् किं चलमिति प्रश्नस्य यदुत्तरांत
रं वयस्तारुण्यादीति तेनाभिन्नं इत्युत्तरं सूक्ष्ममिति पराशयाभिज्ञस्य इतरस्मिन्परविषये साभिप्रायं चेष्टितं सूक्ष्मालंकारः पराशयाभिज्ञश्चासावितरश्च

अन्यत्पृष्टमन्यदुत्तरमिति नायकस्य पुनः कुशलं पृच्छामीति प्रश्नः पृष्टस्योत्तरमुक्तमित्यभिप्रायेण जीवतीत्युक्तमिति सख्या वचनं स
खीवचनस्याभिप्रायोद्घाटनार्थं पुनरपि तदेव कथयसीति नायकस्याक्षेपः मृतां नु कथयामि या श्वसितीति स्वाभिप्रायोद्घाटनं सतिमर
णे खलु तस्याः कुशलं भवति मदागमनसमयेपि श्वासेषु संचरत्सु कथं मृतां कथयेयमित्यभिप्रायः। प्रश्नोत्तरांतराभिन्नमुत्तरं चित्रमुच्य
ते केदारपोषणरताः केखेटाः किंचलं वयः अत्र केदारपोषणरता इति प्रश्नाभिन्नमुत्तरं केखेटाः किंचलमिति प्रश्नद्वयस्य वयइत्येकमुत्तरं
उदाहरणांतराणि विदग्धमुखमंडने द्रष्टव्यानि। सूक्ष्मं पराशयाभिज्ञेतरसाकूतचेष्टितं मयि पश्यति सा केशैः सीमंतमणिमावृणोत् का
मुकस्यावलोकनेन संकेतकालप्रश्नभावं ज्ञातवत्याश्चेष्टेयं अस्तंगते सूर्ये संकेतकाल इत्याकूतं यथा वा संकेतकालमनसं विटं ज्ञात्वा विद
ग्धया आसीन्नेत्रार्पिताकूतं लीलापद्मं निमीलितं। पिहितं परवृत्तांतज्ञातुः साकूतचेष्टितं प्रिये गृहागते प्रातः कांता तल्पमकल्पयत्।
रात्रौ सपत्नीगृहे जागरणेन श्रांतोसीति तल्पकल्पनाकूतं वक्रस्यंदिस्वेदबिंदुप्रबंधैर्दृष्ट्वा भिन्नं कुंकुमं कापि कंठे ९९ तस्य साकूतचेष्टितमर्थो

त्परविषय इति चार्थः संकेतेति संकेतकाले मनो यस्य तज्जिज्ञासुमिति यावत् विटं जारं नेत्राभ्यामर्पितमाकूतं यस्मिन् तादृशं लीलासंबंधि पद्मं नेत्रेत्यादिक्रियाविशे
षणं वा इति सूक्ष्मं पिहितमिति लक्ष्यनिर्देशः तल्पं शयनं वक्त्रेति वक्त्रे प्रस्रवणशीलानां स्वेदबिंदूनां प्रबंधैर्धाराभिः कंठे भिन्नं लग्नं कुंकुमं दृष्ट्वा कापि वयस्या सखी स्मि

पुंस्त्वंव्यंजयतीसतीतन्व्याः पाणौखड्गलेखांलिलेखेत्यन्वयः सूक्ष्मालंकारेपराभिप्रायमवगत्यसाकूतचेष्टितेनोत्तरसमर्पणं पिहितालंकारेतुगूढंपरवृत्तांतंज्ञात्वा साकूतचेष्टयातत्प्रकाशनमितिभेदोबोध्यः इतिपिहितं व्याजोक्तिरिति लक्ष्यनिर्देशः चौर्यरतेकृतेयत्संकेतभूतभूमिपृष्ठलुंठनमित्यन्वयः उपपतिना जारेण न

पुंस्त्वंतन्व्याव्यंजयंतीवयस्यास्मित्वापाणौखड्गरेखांलिलेख अत्रस्वेदानुमितंपुरुषायितंपुरुषोचितखड्गलेखनेनप्रकाशितं व्याजो क्तिरन्यहेतूक्त्यायदाकारस्यगोपनं सखिपश्यगृहारामपरागैरस्मिधूसरा अत्रचौर्यरतकृतसंकेतभूपृष्ठलुंठनलग्नधूलिजालस्यगोपनं पथ्यावा कस्यवानभवेद्रोषः प्रियायाःसव्रणेधरे सभृंगपद्माघ्रासीवारितापिमयाधुना उपपतिनाखंडिताधरायाः नायिकायाःसकाशमा गच्छंतंप्रियमपश्यंत्येवसख्यानायिकांप्रतिहितोपदेशव्याजेनतंप्रतिनायिकापराधगोपनं छेकापन्हुतेरस्याश्चायंविशेषः तस्यांवच नस्यान्यथानयनेनापन्हवः अस्यामाकारस्यहेत्वंतरवर्णनेनगोपनमितिलक्षणेलक्ष्यनाम्नि चोक्तिग्रहणमाकारस्यगोपनार्थहेतं तरप्रत्यायकव्यापारमात्रोपलक्षणं ततश्चआयांतमालोक्यहरिंप्रतोल्यामाल्याः पुरस्तादनुरागमेका रोमांचकंपादिभिरुच्यमानं भामाजुगूहप्रणमत्यथैनं इत्यत्रापिव्याजोक्तिरेव तत्रह्यनुरागकृतस्यरोमांचाद्याकारस्यभक्तिरूपहेत्वंतरप्रत्यायकेनप्रणामेनगो पनंकृतं सूक्ष्मपिहितालंकारयोरपिचेष्टितग्रहणमुक्तिसाधारणव्यापारमात्रोपलक्षणं ततश्चनलिनीदलेबलाकामरकतपात्रइ वदृश्यतेशुक्तिः इतिममसंकेतभुविज्ञात्वाभावंतदाब्रवीदाली मित्यादिष्वपिसूक्ष्मालंकारः प्रसरति अत्रश्लोकेनावत्किमावयोःसंकेतस्था नंभविष्यतीतिप्रश्नाशयंसूचयतिकामुकेतदभिज्ञयाविदग्धयातदासखींप्रतिसाकूतमुक्तमितिसूक्ष्मालंकारोभवति ११ स्यांछेकापन्हुतौ आयां

तमिति प्रतोल्यां रथ्यायां एका काचिद्ग्रामावनितासख्याः पुरस्तात् रोमांचकंपादिभिरनुभावैर्व्यज्यमानमनुरागंएनंहरिंप्रणमंतीसतीजुगूह गोपितवतीत्यन्वयः

एवमिति सूक्ष्मालंकारवदुक्तिरूपव्यापारवर्णनमित्यर्थः उदाहर्त्तव्यमिति यथावक्रस्यंदीतिपद्यएव आलींबालांसस्मितंप्राह मंदंमुग्धाक्षित्वामद्यपश्यामि नाथमित्युत्तरार्द्धनिर्माणे नाथमित्युक्त्याप्रकाशनमितिबोध्यं वस्तुसौंदर्येति वेतसीनिकुंजरूपवस्तुसौंदर्येत्यर्थः ध्वनिभावास्पदत्वात् ध्वनित्वाश्रयत्वात् उ

यतोत्रबलाकायामरकतपात्रप्रतिष्ठितशुक्त्युपमयातस्यानिश्चलत्वेनाश्वस्तत्वंतेनतस्यप्रदेशस्यनिर्जनत्वंतेनतदेवावयोःसंकेतस्थानमि तिकामुकंप्रतिसूचनंलक्ष्यते नचात्रध्वनिराशंकनीयः दूरेव्यज्यमानस्यापिसंकेतस्थानप्रश्नोत्तरस्यस्वोक्त्यैवाविष्कृतत्वात् एवंपिहिता लंकारेप्युदाहार्यं इदंचान्यदत्रावधेयं यत्रासौवेतसीपांथेत्यादिषुगूढोत्तरसूक्ष्मपिहितव्याजोक्त्युदाहरणेषुभावोनस्वोक्त्या विष्कृतःकिं तुवस्तुसौंदर्यबलादूह्य बोद्धव्यविशेषविशेषिताद्गम्यः तत्रैववस्तुतोनालंकारत्वंध्वनिभावास्पदत्वात् प्राचीनैःस्वोक्त्याविष्करणेसत्यलं कारास्पदतास्ती—त्युदाहृतत्वादस्माभिरप्युदाहृतानि शक्यंहियत्रासौवेतसीपांथतत्रेयंसुतरासरित् इतिपृष्ठंतम ध्वानंकामिन्याह सस्पृहं इत्याद्यर्थान्तरकल्पनयाभावाविष्करणमित्यतःप्राकुलिखितोदाहरणेषुसंकेतकालमनसंपुंस्त्वंतन्व्याव्यंजयंतीभामाजुगू हेतिभावाविष्करणमस्तितेष्वेवतत्तदलंकारइति(गूढोक्तिरन्योद्देश्यंचेद्यदन्यंप्रतिकथ्यते वृषापेहिपर— क्षेत्रादायातिक्षेत्ररक्षकः यंप्र तिकिंचिदुक्तंव्यततत्तटस्थैर्मांज्ञासीतितद्देवतदन्यंकंचित्प्रतिश्लेषेणोच्यतेचेत्सागूढोक्तिः वृषेत्याद्युदाहरणं परकलत्रंभुंजानंकामुकं प्रतिवक्तव्यंपरक्षेत्रेसस्यानिभक्षयंतंकंचिदुक्षाणंसमीपेचरंतंनिर्दिश्यकथ्यते नेयमप्रस्तुतप्रशंसा कार्यकारणादिव्यंग्यत्वाभावात् ना विश्लेषमात्रंप्रकृतार्थस्यप्रकृतार्थान्वयित्वेनाविम

प्रसंहरति अतइति येष्वित्यस्यभावाविष्करणमस्तीत्यनेनान्वयः इतिव्याजोक्तिः गूढोक्तिरिति यद ११

न्योद्देश्यकंवाक्यंतत्तदन्यंप्रतिकथ्यतेचेत्गुढोक्तिरलंकारः क्षेत्रंसस्यादेः कलत्रंच अपेहिदूरीभव अविवसितत्वादिति अयंभावः प्रकृताप्रकृतश्लेषेःसावुदय

स्वीक्रियते सर्वथैव प्रकृतासंबद्धस्याप्रकृतार्थस्य कथने: संबंधार्थाभिधायकत्वापत्तेरत: प्रकृतेपि श्लेषवादिना प्रकृतस्य प्रकृतसंबंधो वाच्य: स च न संभवति। विवक्षाविरहादिति कुतस्तर्ह्यप्रकृतार्थकथनं तत्राह तस्येति अप्रकृतार्थस्येत्यर्थः ननु तादृशविवक्षाविरहेपि नानार्थविन्यासमात्रेणास्तु श्लेष एवेत्याशंक्याह विछित्तिविशेषेति तथाच श्लेषसत्वेपि विछित्तिविशेषाद्गूढोक्तिरवश्यमंगीकार्येत्याशयः अत एव श्लेषमात्रमिति तन्मात्रनिराकरणमेवोपक्रांतं न तु श्लेषनिराकरणमिति नाथ इति विपणिः पण्यवीथिका पुष्पिणी रजस्वला आगमेन वेदेन लालनीयः स्तुत्यः आगमनेन लालनीयश्च रजनीं व्याप्येत्यत्यंतसंयोगे द्वितीया

तस्यैकेवलमितरवंचनार्थं निर्दिष्टतया विछित्तिविशेषसद्भावात् यथा वा नाथो मे विपणिं गतो न गणयत्येषा सपत्नी च मां त्यक्त्वा मामिह पुष्पिणीति गुरवः प्राप्ता गृहाभ्यंतरं शय्यामात्रसहायिनीं परिजनः श्रांतो न मां सेवते स्वामिन्नागमलालनीय रजनीं लक्ष्मीपते रक्ष मां अत्र लक्ष्मीपतिनाम्नो जारस्यागमनं प्रार्थयमानायास्तटस्थवंचनाय भगवंतं प्रत्याक्रोशस्य प्रत्यायनं विवृतोक्तिः श्लिष्टगुप्तं कविनाविष्कृतं यदि वृषापेहि परक्षेत्रादिति वक्तिसस्सूचनं श्लिष्टगुप्तं वस्तु यथा कथंचित्कविनाविष्कृतं चेद्विवृतोक्तिः वृषापेहीत्युदाहरणे पूर्ववद्गुप्तं वस्तुसस्सूचनमिति कविनाविष्कृतं यथा वा वत्से मागा विषादं श्वसनमुरुजवं संत्यजोर्ध्वप्रवृत्तं कंपः को वा गुरुस्ते किमिह बलभिदा जृंभितेनात्र याहि प्रत्याख्यानं सुराणामिति भयशमनछद्मना कारयित्वा यस्मै लक्ष्मीमदाद्वः स दहतु दुरितं मंथमुग्धः पयोधिः इदं परवंचनाय गुप्ताविष्क

इति गूढोक्तिः श्लिष्टगुप्तमिति श्लिष्टेत्युपलक्षणं अर्थशक्तिमूलगुप्तस्यापि गच्छाम्यच्युतेत्यादौ संग्राह्यत्वात् वत्सेइति वत्से लक्ष्मि विषादं खेदं हरं च उरुजवं महावेगं ऊर्ध्वप्रवृत्तं श्वसनं स्वासं पवनं च संत्यजकं जलं पातीति तथा वरुणः कंपश्च गुरुर्महान् वृहस्पतिश्च बलं प्रसिद्धं तद्भिदा नाशकेन वलाख्यदैत्यनाशकेनेंद्रेण च अत्र श्रीकृष्णसन्निधौ याहि इति प्रकारेण भयनिवारणव्याजेन सुराणां प्रत्याख्यानं वर्जनं कारयित्वा मंथो मंथनं तेन मुग्धः पयोधिर्यस्मै लक्ष्मीमदात्स वो दु

त्रपेति लज्जया गुप्तस्येत्यर्थः दृष्टयेति गोपेत्वयि यो रागः आसक्तिस्तद्धृतया अपहृतया गवां परागैर्धूलिभिर्व्याप्तया च गोपेति संबोधनं वा किंचित्समविषमं युक्तायुक्तं च इह त्वयि भूमौ च पत्युर्भावः पतिता नां पतनं प्राप्तां च विषमेषुः पंचशरस्तेन खिन्नमनसां विषमेषु संकटेषु खिन्नमनसां च अबलानां स्त्रीणां बलरहितानां च सलेशं ससूचनं गोष्ठं गोस्थानं चेतो नलमिति लंकान अर्थं तेन गच्छतीत्यर्थे नलं कामयते इच्छतीत्यर्थो गुप्तः तदाविष्करणं

त्रपा गुप्ताविष्करणं यथा दृष्ट्या केशव गोपरागहृतया किंचिन्न दृष्टं मया तेनेह स्खलितास्मि नाथ पतितां किन्नाम नालंबसे एकस्त्वं विषमेषु खिन्नमनसां सर्वाबलानां गतिर्गोप्यैवं गदितः सलेशमवताद्गोष्ठे हरिर्वश्चिरं अत्र कृष्णस्य पुरतो विषमे परिस्खलनमभिहितवत्यास्तं कामयमाना या गोपिका या वचने विषमपथि स्खलनपतनत्राणसंप्रार्थनरूपेण झटिति प्रतीयमानेनार्थेन गुप्तं विवक्षितमर्थान्तरं सलेशं ससूचनमित्यनेनाविष्कृतं एवं नैषधादिषु चेतो नलं कामयते मदीयमिति दमयंतीवाक्यादिकमप्युदाहरणं इदं शब्दशक्तिक्रोडीकृतगुप्ताविष्करणं अर्थशक्तिमूलगुप्तार्थाविष्करणं यथा गच्छाम्यच्युत दर्शनेन भवतः किं तृप्तिरुत्पद्यते किं चैवं विजनस्थयोर्हतजनः संभावयत्यन्यथा इत्यामंत्रणभंगिसूचितवृथावस्थानखेदालसामाश्लिष्यन् पुलकोत्कराचिततनुर्गोपीं हरिः पातु वः अत्र गच्छाम्यच्युते त्यामंत्रणेन त्वया रंतुकामेच्छयो स्थितं तन्न लब्धमित्यर्थशक्तिलभ्यं वस्तु तृतीयपादेनाविष्कृतं ९ चद्वीणा दृष्टा चेत्यनेनेति बोध्यम् शब्दशक्तीति शब्दश्लेषवशेनेत्यर्थः क्रोडीकृतः संगृहीतः गच्छाम्येति अच्युतमहिषये अस्खलितेति गुप्तोर्थः चिरकालं त्वद्दर्शनेनापि न तृप्तिरित्यर्थे न दर्शनेन न तृप्तिरपि तु संभोगेनेत्यर्थो गुप्तः विजनस्थयोरेकांतगतयोः हतश्चासौ जनः अन्यथा रत्यर्थं स्थितावितिसंभावयति तेन द्वयोरकीर्तिर्जातैव वृथैवात्मानं वंचयाव इति गुप्तार्थः आमंत्रणस्याच्युतेत्यादेर्भंग्या रचनया सूचितो यो वृथावस्थानखेदस्तेनालसां॥ ॥ ७ ॥ ७ ॥

कविनिबद्धेति कविनिबद्धेनवक्त्रागुप्तस्येत्यर्थः सुभ्रुत्वमिति शोभनभ्रूर्दयिता दृष्टिश्च तयोः संबोधनं कोपोरोषः विकारश्च रागिण्यनुरागिणीति अवन तेनस्त्रेइतिचमयीत्यस्यविशेषणं पक्षेरागिणि रक्तिमशीले नम्रे इतिदेक्सबोधनं एवंदृष्टेइत्यपि उच्चारणेनेति स्वरविशेषसहकृतोच्चारणेनेत्यर्थः

सर्वमेतत्कविनिबद्धवक्त्रगुप्ताविष्करणोदाहरणं कविगुप्ताविष्करणंयथा सुभ्रुत्वंकुपितेत्यपास्तमशनंत्यक्ताः कथायोषितां दूरादेवविवर्जिताःसुरभयःस्रग्गंधधूपादयः कोपंरागिणिमुंचमय्यवनतेदृष्टेप्रसीदाधुनासत्यंतद्विरहाद्भवतिदयितेसर्वामममांधादिशः अत्रेतावदीर्ष्यामानकलुषितदयिताप्रसादनव्यापारविधिः प्रतीयते दृष्टिरोगान्तेस्यदृष्टिंप्रत्याक्रोशाविवक्षितार्थः सचदृष्टेइत्यस्यपदस्यप्लुतोच्चारणेनसबुद्धिरूसतामवगमय्याविष्कृतः कविनिबद्धवक्त्रगुप्तपरवचनार्थे कविगुप्तस्वप्रौढिकथनार्थमितिभेदः युक्तिःपरातिसंधानंक्रियया मर्मगुप्तये त्वामालिखंतीदृष्ट्वान्यधनुःपौष्पंकरेलिखत् अत्रपुष्पचापलेखनक्रियया मन्मथोमयालिखित इति भ्रांत्युत्पादनेनस्वानुरागरूपमर्मगोपनायपरवचनं विवक्षितं यथावा दंपत्योर्निशिजल्पतोर्गृहशुकेनाकर्णितंयद्वचस्तत्प्रातर्गुरुसन्निधौनिगदतस्तस्यातिमात्रंवधूः कर्णालंबितपद्मरागशकलंविन्यस्यचंचूपुटेव्रीडार्त्ताविदधातिदाडिमफलव्याजेनवाग्बंधनं अत्रशुकवाङ्मुद्रणयातन्मुखेनस्वकीयरहस्यवचनशुश्रूषुजनवंचनंकृतं व्याजोक्तावाकारगोपनं युक्तौतदन्यगोपनमितिभेदः यद्वा व्याजोक्तावुक्त्यागोपनमिहतु क्रिययागोपनमितिभेदः एवंच आयांतमालोक्यहरिंप्रतोल्यामितिश्लोकेपियुक्तिरेव १॥ इतिविवृतोक्तिः युक्तिरिति स्वस्यमर्मगोपनायक्रियया परस्यातिसंधानंवंचनंसायुक्तिरलंकारः त्वामिति नायकंप्रति दूतीवचनं पुष्पस्येदंपौष्पं दंपत्योरिति तस्यशुकस्य अतिमात्रं अत्यर्थंनिगदतइतिसंबंधः फलशब्दोबीजपरः गोपनीयविषयभेदस्यविछित्तिभेदाप्रयोजकत्वादाह यद्वेति नन्वेवंसत्यायांतमालोक्येत्यादौव्याजोक्तिरेवेतिप्रागुक्तंविरुध्येतेत्याशंक्याह एवं

एवंचपूर्वग्रंथआद्यपक्षाभिप्रायेणेतिभावः इतियुक्तिः लोकेति अनुकृतिरनुकरणं सहस्वेति अर्थाद्विरहं मासानभिव्याप्येत्यर्थः नामैवेति हेवरदतवनामैववांछितदातत्वमाख्यातिकथयति अतस्त्वंवरदानमुद्रामितरदेवतवन्नधारयसि यतोविश्वप्रसिद्धतरेविप्रकुलेप्रसूतिरुत्पत्तिर्यस्यतादृशस्येत्यर्थः इतिलोकोक्तिः छेकोक्तिरिति लक्ष्यनिर्देशः अर्थांतरगर्भिता अर्थांतरव्यंजकतासमीपस्थं यद्वृत्तांतः पृष्टस्तत्समीपस्थं सचायंचेति पृच्छ्यमानवृत्तां

लोकप्रवादानुकृतिर्लोकोक्तिरितिभण्यते सहस्वकतिचिन्मासान्मीलयित्वाविलोचने अत्रलोचनेमीलयित्वेतिलोकवादानुकृतिः यथावा मदीयेवरदराजस्त्वे नामैवतेवरदवांछितदातृभावंव्याख्यात्यतोनवहसेवरदानमुद्रां विश्वप्रसिद्धतरविप्रकुलप्रसूतेर्यज्ञोपवीतवहनं हिनखल्वपेक्ष्य अत्रोत्तरार्द्धेलोकवादानुकारः छेकोक्तिर्यदिलोकोक्तेःस्यादर्थांतरगर्भिता भुजगएवजानीतेभुजंगचरणंसखे केनचित्कस्यचित्वृत्तांतंपृष्टस्यसमीपस्थमन्यंनिर्दिश्यायमेवतस्यवृत्तांतंजानातीत्युक्तवतोयमहेःपादानहिरेवजानातीतिलोकवादानुकारः अत्रसचायंचलोकविदितेधनार्जनादिव्यापारेसहचारिणावितिविदितविषयतयालोकोक्त्यनुवादस्यप्रयोजनेस्थितेरहस्येप्यंगव्यापारेतस्यायंसहचरइतिमर्मोद्घाटनमर्पितेनगर्भीकृतं यथावा मलयमारुतव्रातायाताविकसितमल्लिकापरिमलभरोभग्नोग्रीष्मस्त्वमुत्सहसेयदि घनघटयतंत्वन्निःस्नेहंयएवनिवर्त्तनेप्रभवनिगवांकिन्नःश्छिन्नसएवधनंजयः अत्रधनलिप्सयाप्रोषितांगनासखीवचनेयएवगवांनिवर्त्तनेप्रभवति १॥ तत्तत्समीपस्थश्चेत्यर्थः तेनलोकोक्त्यनुवादेन मलयेति व्राताः समूहाः याताःगताः विकासिनांमल्लिकाकुसुमानांपरिमलस्यभरोयस्मिन्तादृशोग्रीष्मोभग्नोनष्टः हेघनत्वंयद्युत्सहसेउत्साहवान्भवसितदातंनिःस्नेहंनायकंघटय अनयासहसंयोजयगवांनिवर्त्तनेपरापहृतानांव्यावर्त्तनेयएवप्रभवति सएवधनंजयोर्जुनइत्यन्वयः सिसपा प्रोषितस्ययांगनातत्सखी वचनइतिसंबंधः

ओधास्तैलंगाः इमांमत्सखीं गोप्रायोगोतुल्यः इतिछेकोक्तिः वक्रोक्तिरिति काकुध्वनेर्विकारः अपरार्थस्य अभिप्रेतार्थाद्र्थांतरस्य नंदीहरस्यगणविशेषः दारु
णाक्रूरेत्यभिप्रेतं काष्ठेनेतिकल्पनंविकृतत्वंच केस्यचिद्दर्णस्यावापोद्धापाभ्यां भवित्रीति सीतांप्रतिरावणोक्तिः पादत्रयं चतुर्थस्तुप्रतिसीतायाः तेनव
पतिः संरामो युधिसंग्रामेपुरतोग्रतो नस्थातास्थास्यतीत्यर्थः अतिशयेन लघुर्लघिष्ठस्तत्संबोधनं इदंपादत्रयं षष्ठाक्षरात्सराणांसप्तमानांत्रिनवीतिवर्णो

सएवधनंजयइत्यांध्रजातिप्रसिद्धलोकवादानुकारः अत्रातिसौंदर्यशालिनीमिमामपहायधनलिप्सयाप्रस्थितोरसानभिज्ञत्वात्गोप्रा
यएव तस्यनिवर्त्तकस्तुधनस्यजेताधनेनाकृष्टस्यतद्विमुखीकरणेनप्रत्यासेपकत्वादित्यर्थांतरमपिगर्भितं वक्रोक्तिः श्लेषकाकुभ्या
मपरार्थप्रकल्पनं मुंचमानंदिनप्रागेनेहनंदीहरांतिके अत्रमानंमुंचप्रयानारात्रिरित्याशयेनोक्तायांवाचिनंदिनंप्राप्तंमामुंचेत्यर्थांतरंश्ले
षेणपरिकल्पितं यथावा अहोकेनेदृशीबुद्धिर्दारुणातवनिर्मिता। त्रिगुणाश्रूयतेबुद्धिर्नतुदारुमयीक्वचित् इदमविकृतश्लेषोक्तेरुदा
हरणं विकृतश्लेषवक्रोक्तेर्यथा भवित्रीरंभोरुत्रिदशवदनग्लानिरधुनासतेरामस्थातानयुधिपुरतोलक्ष्मणसखः इयंयास्यत्युच्चैर्विपदम
धुनावानरचमूलघिष्ठेदंषष्ठाक्षरपरविलोमास्यपुनःसर्वमिदंशब्दश्लेषमूलायावक्रोक्तेरुदाहरणं अर्थश्लेषमूलायावक्रोक्तेर्यथा भि
क्षार्थीसक्वयातःसुतनुबलिमखेतांडवंकाद्यभद्रेमन्येवृंदावनांतेक्वनुसमृगशिशुर्नैवजानेवराहं ॥ नांविलोपोयत्रतादृशंपुनःपठेत्यर्थः श

ब्दश्लेषेति शब्दस्यपरिवृत्त्यसहत्वादितिभावः भिक्षेति जलनिधिश्चहिमवांश्चतत्कन्ययोर्लक्ष्मीपार्वत्योःक्रमेणइत्थंलीलयासंलापोमिथोभाषणंनो
स्मान्त्रायतामित्यन्वयः इत्थंकीदृक्कृतदाह भिक्षार्थीति हरमभिप्रेत्यलक्ष्म्यावाक्यं बलेर्दैत्यस्यमखेयज्ञेइतिवामनाभिप्रायं पार्वत्याः भद्रेशोभनेतां
डवंनृत्यमद्यक्ववर्ततइति लक्ष्मीप्रश्नस्योत्तरंवृंदावनस्यांतेमध्येइतिश्रीकृष्णाभिप्रायं मृगशिशुः महादेवेनकरेधृतः परशुमृगवराभीतिहस्तंप्रसन्नमि

इदंलक्ष्म्यावाक्यं नैवेतिपार्वत्याः मृगःपशौकुरंगेचेतिविश्वः कच्चिदितिप्रश्ने जरठोजीर्णः वृषपतिर्वृषश्रेष्ठइतिहरवृषभाभिप्रायंलक्ष्मीवाक्यं गोपोगवांपालक
इतिकृष्णाभिप्रायमुत्तरमिति अत्रभिक्षादिपदानांपरिवृत्तिसहत्वादर्थश्लेषमूलत्वं असमालोच्येति अविचार्येत्यर्थः मालयापुष्पमालया इतिवक्रोक्तिः
स्वभावोक्तिरितिलक्ष्यनिर्देशः जात्यादिस्थस्यजात्यादिसंबंधिनः आदिपदेनक्रियादिपरिग्रहः उत्तरंगाणितरंगायमाणान्यक्षीणियेषांतैः ताविति तौप्र
क्रांतोवधूवरौ गुरूणांसमीपे अन्योन्याभिमुखंप्रचलितौपरस्परस्यमार्गप्रदानयोरभसोवेगस्तेनस्खलितंभ्रष्टमवधानंसावधानत्वं ययोस्तादृशौउभाव

बालेकच्चिन्नदृष्टोजरठवृषपतिर्गोपएवास्यवेत्तालीलासंलापइत्थंजलनिधिहिमवत्कन्ययोस्त्रायतांनः कान्तायथा असमालोच्यकोपस्तेनो
चितोयमिनीरित्ता नैवोचितोयमितितताडयामासमालया अत्रनैवोचितइतिकाकुस्वरविकारेणोचितएवेत्यर्थांतरकल्पनं स्वभावोक्तिःस्व
भावस्यजात्यादिस्थस्यवर्णनं कुरंगैरुत्तरंगाक्षैःस्तब्धकर्णैरुदीक्ष्यते तौसम्मुखप्रचलितौसविधेगुरूणांमार्गप्रदानरभसस्खलितावधानौ
पार्श्वोपसर्पणमुभावपिभिन्नदिक्कंकृत्वामुहुर्मुहुरुपासरतांसलज्जं भाविकंभूतभाव्यार्थसाक्षात्कारस्यवर्णनं अहंविलोकयेद्यापियुध्यंते
त्रसुरासुराः स्यानभीषणत्वोद्ञावनपरमिदं यथावा अद्यापिनिष्ठतिदृशोरिदमुत्तरीयंधर्त्तुंपुरस्तनतटात्पतितंप्रवृत्ते वाचंनिशम्यनयनंनय
नंममेतिकिंचित्तदायदकरोत्स्मितमायताक्षी ॥ पिभिन्नदिक्कंवामदक्षिणरूपदिक्संबंधिपरस्परपार्श्वभागोपसर्पणंमुहुर्मुहुः कृत्वासलज्जंयथास्या

त्तथोपसरतां उपसर्पणंचक्रतुरित्यर्थः पूर्वोदाहरणेकुरंगजातिस्वभाववर्णनं अत्रसलज्जक्रियास्वभाववर्णनमितिभेदः इतिस्वभावोक्तिः भाविकमि
तिलक्ष्यनिर्देशः अद्यापीति ममनयनंनयनेमितितस्यावाचंनिशम्यस्तनतटात्पतितमुत्तरीयंधर्त्तुंपुरःप्रवृत्तेमयिसतितदाआयताक्षीयत्किंचित्स्मितमक
रोत् इदमद्यापिममदृशोःपुरस्तिष्ठतीत्यन्वयः अत्रनयनपदेनस्ववाचकत्वरूपशक्यसंबंधेननेत्रपदंलक्ष्यते तस्माच्च वस्त्रप्रतीतिः किंवास्ववाचकवा

च्यत्वरूपशक्यसंबंधेनवस्त्रमेवलक्ष्ययतीतिवचोवाणैरित्यादिवक्ष्यितलक्षणावाधोध्या नेत्रंपथिगुणेवस्त्रइतिविम्बः इतिभाविकं उदात्तमिति ऋद्धेःस मृद्देश्वरितंउदात्तालंकारः तथाश्लाघ्यचरितं अन्यस्योपलक्षणमंगंचेत्तदर्पितया सानोशिखरेयस्यपर्वतस्य किरीटीअर्जुनः कृच्छ्रात्कष्टात् आंजनेयेन हनूमता इत्युदात्तं अत्युक्तिरितिलक्ष्यनिर्देशः अद्भुतंचतद्तथ्यंमिथ्यारूपं अकूपाराःसमुद्राः आहुरिति स्वमतेनुतथ्यत्वातथ्यत्वाभ्यांभेदइतिभावः अतथ्ये अद्भुतत्वविशेषणस्यकृत्यंदर्शयति अनयोरित्यादि एतत्सयंयोगेप्ययोगोःसंबंधातिशयोक्तिरित्यत्रप्रागुदाहृतं असदुक्तितारतम्येनेति

उदात्तमृद्धेश्वरितंश्लाघ्यंचान्योपलक्षणं सानौयस्याभवद्युद्धंतद्धूर्जटिकिरीटिनोः इदंश्लाघ्यचरितस्यान्यांगत्वेउदाहरणं ऋध्युदाहरणंयथा रत्नस्तंभेषुसंक्रांतैःप्रतिबिंबशतैर्वृतः ज्ञातोलंकेश्वरःकृच्छ्रादांजनेयेनतत्वतः अत्युक्तिरद्भुतातथ्यशौर्यौदार्यादिवर्णनं त्वयिदातरिराजेंद्र याचकाःकल्पशाखिनः इयमौदार्यात्युक्तिः शौर्यात्युक्तिर्यथा राजन्सप्ताप्यकूपारास्त्वत्प्रतापाग्निशोषिताः पुनस्त्वद्वैरिवनिताबाष्पपूरेणपू रिताः संपदत्युक्ताबुदात्तालंकारः शौर्यात्युक्तावत्युक्त्यलंकारइतिभेदमाहुः अनयोरनवद्यांगिस्तनयोर्जृंभमाणयोः अवकाशोनपर्याप्तस्तव बाहुलतांतरे अल्पंनिर्मितमाकाशमनालोच्यैववेधसा। इदमेवंविधंभाविभवत्याःस्तनमंडलमितिसदसदुक्तितारतम्येनातिशयात्युक्त्या भेदः निरुक्तिर्योगतोनाम्नामन्यार्थत्वप्रकल्पनं ॥१॥अनयोरित्यत्रासदुक्तिमात्रं अल्पमिति पद्येत्वत्यंतासदुक्तिरितितारतम्येनेत्यर्थः तथाचाद्भुतेति विशेषणादत्यंतातथ्यरूपत्वलाभान्नातिशयोक्तावतिव्याप्तिरितिभावः अतएवानयोरितिपद्यानंतरंदंडिनोक्तं इतिसंभाव्यमेवैतद्विशेषाख्यानसंस्कृतमि ति एवंलोकातीतइवात्यर्थमध्यारोप्यविवक्षितः योर्थस्तेनातितुष्यंतिविदग्धानेतरेयथेत्युक्त्वा अल्पंनिर्मितमित्याद्युदाहृत्य इदमत्युक्तिरित्युक्तमितिच इ त्यत्युक्तिः निरुक्तिरितिलक्ष्यं योगवशान्नाम्नामर्थविशेषाभिधायिनामर्थांतरोपवर्णनमितिलक्षणम् ॥ ॥ ॥ राम ९२

ईदृशैरिति चंद्रंप्रतिविरहिण्याउक्तिः ईदृशैर्जनसंतापनरूपैः दोषायाराात्रेःकर्त्ता दोषाणामाकरश्च पुरेति कनिष्ठाकांगुलिविशेषः अधिष्ठितःकालिदासो यस्यांसा अंगुलिविशेषरूपा अर्थवतीनविद्यतेकविनामयस्यांसेत्यन्वर्थनामवती इतिनिरुक्तिः कितवोद्यूतकृत् धूर्तोक्षदेवीकितवइत्यमरः ननु प्रसिद्धानुवादस्याचमत्कारित्वात्कथमलंकारत्वमतआह निर्ज्ञीतइत्यादि शकुनैःपाशकैर्दीव्यतीतिशाकुनिकः आविष्कृतमितिध्वनित्वशंकानिवारणं

ईदृशैश्चरितैर्जानेसत्यंदोषाकरोभवान् यथावा पुराकवीनांगणनाप्रसंगेकनिष्ठिकाधिष्ठितकालिदासा अद्यापितत्तुल्यकवेरभावादना मिकासार्थवतीबभूव प्रतिषेधःप्रसिद्धस्यनिषेधस्यानुकीर्तनं नद्यूतमेतत्कितवक्रीडनंनिशितैःशरैः निर्ज्ञातोनिषेधःस्वतोनुपयुक्तत्वा दर्थांतरगर्भीकरोति तेनचारुत्वान्वितोयंप्रतिषेधनामालंकारः उदाहरणं युद्धरंगेप्रत्यवतिष्ठमानंशाकुनिकंप्रतिविदग्धवचनं तत्रयुद्ध स्याक्षद्यूतत्वाभावोनिर्ज्ञातएवकीर्त्यमानस्तत्रैवतवप्रागल्भ्यंनयुद्धेइत्युपपत्तिग्रहोस्तीत्युपहासंगर्भीकरोति तच्चकितवेत्यनेनाविष्कृतं यथावा नेविषेणनशस्त्रेणनाग्निनानचमृत्युना अप्रतीकारपारुष्याःस्त्रीभिरेवस्त्रियःकृताः अत्रस्त्रीणांविषादिनिमित्तत्वाभावःप्रसि द्धएवकीर्त्यमानस्तासांविषाद्यतिशायिक्रौर्यमिति अमुमर्थंव्यक्तीकरोतीतिसचाप्रतीकारपारुष्याइतिप्रतीकारवद्भ्योविषादिभ्यस्तासां विशेषंदर्शयतविशेषणेनाविष्कृतः। सिद्धस्यैवविधानंयत्तदाहुर्विध्यलंकृतिं पंचमोदंचनेकालेकोकिलःकोकिलोभवेत् निर्ज्ञातविधान मनुपयुक्तिबाधितंसदर्थांतरगर्भीकरणेनचारुतरमितितंविधिनामानमलंकारमाहुः उदाहरणेकोकिलस्यकोकिलत्वविधानमनुपयुक्तंस दतिमधुरपंचमध्वनिशालितयासकलजनहृद्यत्वंगर्भीकरोति तच्चपंचमोदंचनेइतिकालविशेषणेनाविष्कृतं ॥१॥एवमग्रेपि इतिप्रतिषेधः पंचम स्यस्वरविशेषस्योदंचनमाविष्करणंयत्रतादृशेकालेकोकिलःकोकिलोमधुरध्वनिरभवदित्यर्थः द्वितीयकोकिलपदस्यानुपयुक्तार्थत्वेनार्थांतरेसंक्रमित त्वात् सकलजनहृद्यचमत्कृतिविश्रान्तिप्रयोजनम् ॥

एवंचशालितयेत्यनेनतरंलक्षितयेतिशेषोबोध्यः पूर्ववत् ध्वनित्वाशंकानिवारणायतच्चेत्याद्युक्तं हेहस्तेति शूद्रतपस्याजनिताधर्मवशादपूर्णायुषिद्विज
बालकेमृतेतद्धोद्यतस्यरामस्यस्वहस्तंप्रतिइयमुक्तिः जीवातवेजीवनाय शूद्रएवतपश्चरणान्मुनिरिवमुनिः तस्मिन्कृपाणंखड्गंविसृजनिक्षिपयतो
रामस्याकरुणस्यगात्रंशरीरमसि निर्भरमतिशयेनगर्भखिन्नायाः सीतायाःप्रवासनेनिर्वासने तत्रपटोर्दक्षस्येत्यर्थः अत्ररामपदमकरुणत्वरूपार्थां
तरसंक्रमितं तदतिशयोव्यंग्यः सचात्यंतमित्यनेनोक्तः ध्वनिभावास्पदानि ध्वनित्वप्रयोजकानि व्यवस्थितत्वादिति शब्दार्थशक्त्याक्षिप्तोपिव्यंग्यो

यथावा हेहस्तदक्षिणमृतस्यशिशोर्द्विजस्यजीवातवेविसृजशूद्रमुनौकृपाणं रामस्य गात्रमसिनिर्भरगर्भखिन्नसीताविवासनपटोःक
रुणाकुतस्ते अत्ररामस्यस्वहस्तंप्रतिरामस्यगात्रमसीतिवचनमनुपपन्नंसद्रामस्येत्थमनेनस्वस्यात्यंतनिष्करुणत्वंगर्भीकरोतीतिनच
निर्भरेत्यादिविशेषणेनाविष्कृतं यद्यप्यनयोर्विधिनिषेधयोरुदाहरणेषुव्यंग्यान्यर्थांतरसंक्रमितवाच्यरूपाणि तथापिनध्वनिभावा
स्पदानि स्वोक्त्यैवव्यंग्यविशेषाविष्करणात् व्यंग्याविष्करणेचालंकारत्वमेवेतिप्राक्प्रसक्तत्वात्प्रकरणेव्यवस्थितत्वात् पूर्वंबाधितौ
प्रतिषेधौआक्षेपभेदत्वेनोक्तौ इहतुप्रसिद्धौविधिप्रतिषेधौतत्प्रतिद्वंद्विनाबलंकारत्वेनवर्णितावितिभेदः हेतोर्हेतुमतासार्द्धवर्णनंहेतुरु
च्यते असावुदेतिशीतांशुर्मानच्छेदायसुभ्रुवो यथावा एषतेविद्रुमच्छायोमरुमार्गइवाधरः कस्यनोतनुतेतन्विपिपासाकुलितंमनः ॥ ॥

र्थः कविनापुनः यत्राविष्क्रियतेस्वोक्त्यासान्यैवालंकृतिर्ध्वनेरितिध्वनिकारवचनेननिर्णीतत्वादित्यर्थः उक्ताविति निषेधाभाससमाक्षेपंबुधाः केचनमन्व
ते आक्षेपोन्योविधौव्यक्तेनिषेधेचतिरोहिते तद्व्यक्ताभ्यांनाहंदूतीगच्छगच्छसीत्युदाहरणयोःप्रतिपादितावित्यर्थः प्रसिद्धत्वाद्बाधितप्रतिद्वंद्वित्वं इति राम
विधिः हेतोरिति हेतुमताकार्येणमानच्छेदःकार्ये एषइति विद्रुमच्छायः प्रवालकांतिः विगततरुच्छायश्च मरुर्निर्जलदेशः ॥ ७ ॥ ७ ॥ ९३

मानेइति मानेनेच्छति अनिच्छतिसति एवमुपशमेवारयतिसति ह्रियांलज्जायांक्ष्मांभूमिमालिखंत्यां भूम्युल्लेखनस्यतदनुभावत्वात् स्वातंत्र्येचपरिह
त्यपराङ्मुखीभूयतिष्ठतिसति धैर्यंकरौव्याधूयममनानुमतमितिसूचनायहस्तधूननंकृत्वागतेसति हेतृष्णेत्वामनुसरतास्मजनेनैतावत्फलंप्रा
प्तं यस्मादेनापियोनस्पृष्टः सएवचरणौस्वीयौस्प्रष्टुंनसम्यक्मन्यते अनुजानातीत्यन्वयः अत्रतृष्णारूपहेतुतत्कार्ययोः स्पष्टमभिधानंभेदांतरमा
ह हेतुहेतुमतोरिति केचित् भट्टोद्भटप्रभृतयः तदुक्तं हेतुमतासहहेतोरभिधानमभेदताहेतुरिति लक्ष्मीति कटाक्षाः विदुषांलक्ष्मीविलासाइत्य

मानेनेच्छतिवारयत्युपशमेक्ष्मामालिखंत्यांह्रियांस्वातंत्र्येपरिवृत्यतिष्ठतिकरौव्याधूयधैर्यंगते तृष्णेत्वामनुबध्नताफलमियत्प्राप्तंजनेनामु
नायत्स्पृष्टोनपदास्सएवचरणौस्प्रष्टुंनसंमन्यते इत्युदाहरणं हेतुहेतुमतोरैक्यंहेतुं केचिद्वचक्षते लक्ष्मीविलासाविदुषांकटाक्षावेंक
टप्रभोः अत्रचकार्यावश्यंभावनैर्बल्यादिप्रत्यायनार्थः कार्यकारणभेदव्यपदेशः यथावा आयुर्दानमहोत्सवस्यविनतक्षोणीभृतांमू
र्त्तिमान्विश्वासोनयनोत्सवोमृगदृशांकीर्तेःप्रकाशःपरः आनंदःकलिताकृतिः सुमनसांवीरश्रियोजीवितं धर्मस्यैषनिकेतनंविजयतेवी
रःकलिंगेश्वरः अत्रदानमहोत्सवायुष्करत्वादिनाध्यवसितेराज्ञितदायुष्ट्वादिव्यपदेशः ऽन्वयः अत्रविलासहेतोर्विलासाभिन्नत्वेनाभिधानं

एवंविधलक्षणायाः प्रयोजनमाह अत्रेति कार्यावश्यंभावश्चतच्छैघ्र्यंचेतिविग्रहः आदिनाअपथ्याशनंरोगइत्यादौकार्यगतोपादेयत्वानुपादेयत्वा
दिसंग्रहः आयुरिति वीरःकलिंगेश्वरःकलिंगदेशाधिपोविजयतइत्यन्वयः कीदृशःदानरूपस्यमहोत्सवस्यआयुरितिकार्याभिन्नत्वेनाभिधानं
एवमग्रेपि विशेषेणनतानांक्षोणीभृतांराज्ञांकलिताकृतिःधृताकारः वीरश्रियः वीरलक्ष्म्याः निकेतनंस्थानं इतिश्रीमत्सद्वाक्यप्रमाणाभिज्ञ
तत्सदुपाख्यभट्टविठ्ठलसूरिवरात्मजश्रीरामचंद्रसूरिसूनुनावैद्यनाथेनकृतायामलंकारचंद्रिकाख्यायांकुवलयानंदटीकायांहेत्वलंकारप्रकरणं

भावस्येति निर्वेदादेर्व्यभिचारिभावस्येत्यर्थः प्रत्यक्षप्रमुखाः प्रत्यक्षाद्याः तेच प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुलब्धिसंभवैतिह्याख्याः विभावे
त्यादि रत्यादेरालंबनोद्दीपनरूपाणि नायिकाचंद्रोदयादीनि कारणानि काव्ये वर्ण्यमानानि विभावयंतीति व्युत्पत्त्या विभावपदेनाभिधीयंते कार्याणि
च कटाक्षरोमांचादीनि तथाविधान्येवानुपश्चाद्भवंतीति व्युत्पत्त्यानुभावपदेन एषामेव कार्याणां रत्यादिनोत्पादनेकर्तव्ये सहकारिभूतान्युत्कंठादीनि
च व्यभिचारिपदेन विशेषादभितः समंततः येस्थायिनं चारयंतीति व्युत्पत्तेः एवं रतिरासक्त्यनुरागादिपर्यायबोध्यांतःकरणवृत्तिः विकृतविदूषिका

इत्थंशतमलंकारालक्षयित्वा निदर्शिताः प्राचामाधुनिकानांच मतान्यालोच्य सर्वतः रसभावतदाभासभावशांतिनिबंधनाः चत्वारोर
सवत्प्रेयऊर्जस्विच्च समाहितं भावस्य चोदयःसंधिःशबलत्वमितित्रयः। अष्टौप्रमाणालंकाराः प्रत्यक्षप्रमुखाःक्रमात् एवंपंचदशान्यान
प्यलंकारान्विदुर्बुधाः तत्रविभावानुभावव्यभिचारिभिर्व्यंजितोरतिहासशोकादि—श्चित्तवृत्तिविशेषोरसः सयत्रपरस्यांगं भवति तत्रर
सवदलंकारः विभावानुभावाभ्याममभिव्यंजितोनिर्वेदादिस्त्रयस्त्रिंशद्देवतागुरुशिष्यद्विजपुत्रादावभिव्यज्यमानारतिश्चभावः ॥

द्विचेष्टादर्शनजन्याचित्तस्य विकासरूपावृत्तिर्हासः इष्टनाशानिष्टलाभादिजन्याचित्तवृत्तिः शोकःप्रसिद्धः आदिपदेनक्रोधोत्साहभयजुगुप्साविस्मयनि
र्वेदाख्यानांषण्णांपरिग्रहः विशेषपदेनचरत्यादेः स्थायित्वप्रयोजकंपरिपुष्टत्वंकांताविषयत्वमितरानंगत्वंचविवक्षितं तदुक्तं रत्यादिश्चेन्निरंगःस्याद्दे
वादिविषयोऽथवा अन्यांगभावभाग्वास्यान्नतदास्थायिशब्दभागिति स्थायिनएवचाभिव्यक्तरसत्वं यदाहुः कारणान्यथकार्याणिसहकारीनिया
निच रत्यादेःस्थायिनालोकेतानिचेन्नाट्यकाव्ययोः विभावाअनुभावास्तत्कथ्यंतेव्यभिचारिणः व्यक्तःसतैर्विभावाद्यैःस्थायीभावोरसः स्मृतइति राम
अभिव्यक्तानांच रत्यादीनांरसरूपाणांक्रमात् शृंगारहास्यकरुणरौद्रवीरभयानकबीभत्साद्भुतशांतरूपविशेषसंज्ञाबोध्याः निर्वेदादिरिति ॥ ॥ ९४

निर्वेदग्लानिशंकाख्यास्तथासूयामदश्रमाः आलस्यंचैवदैन्यंचचिंतामोहःस्मृतिर्धृतिः व्रीडाचपलताहर्षआवेगोजडतातथा गर्वोविषादऔत्सुक्यंनिद्रा
विस्मृतिरेवच स्वप्नोविबोधोऽमर्षश्चाप्यवहित्थमथोग्रता मतिर्व्याधिस्तथोन्मादस्तथामरणमेवच त्रासश्चैववितर्कश्चविज्ञेयाव्यभिचारिणः त्रयस्त्रिंश
दमीभावाःसमाख्यातास्तुनामतइतिभरतेनोक्ताः लज्जादिनाविकारगोपनमवहित्थाख्योभावः देवतेत्याद्यपरिपुष्टत्वादेरुपलक्षणं रतिरितिचापुष्टहा

सयत्रापरस्यांगंसप्रेयोलंकारः अनौचित्येनप्रवृत्तोरसोभावश्चरसाभासोभावाभासश्चेत्युच्यते सयत्रापरस्यांगंतदूर्जस्वित् भावस्यप्रशा
म्यदवस्थाभावशांतिः तस्याःपरांगत्वेसमाहितं भावस्योद्गमावस्थाभावोदयः द्वयोर्विरुद्धयोर्भावयोः परस्परस्पर्धीभावसंधिः बहूनांभा
वानांपूर्वपूर्वोपमर्देनोत्पत्तिर्भावशबलता एतेषामितरांगत्वेभावोदयादयस्त्रयोलंकारः तत्ररसवदुदाहरणं मुनिर्जयतियोगींद्रोमहात्माकुं
भसंभवः येनैकचुलकेदृष्टौदिव्यौतौमत्स्यकच्छपौ अत्रमुनिविषयरतिरूपस्यभावस्याद्भुतरसोंगं यथावा अयंसरसनोत्कर्षीपीनस्तनवि
मर्दनः नाभ्यूरुजघनस्पर्शीनीवीविस्रंसनःकरः अत्रकरुणस्यशृंगारोंगं प्रेयोलंकारएवभावालंकारउच्यते सयथा कदावाराणस्या
ममरतटिनीरोधसिवसन्वसानःकौपीनंशिरसिनिदधानोंजलिपुटं अयेगौरीनाथत्रिपुरहरशंभोत्रिनयनप्रसीदेतिक्रोशन्निमिषमिवनेः
ष्यामिदिवसान् अत्रशांतिरसस्यकदेतिपदसूचितचिंताख्योव्यभिचारिभावोंगं ॥ साद्देः अनौचित्येनेति एतच्चोदाहरणेदर्शयिष्यामः मुनिरिति
कुंभसंभवोऽगस्त्यः एकचुलकेनसमुद्रेपीयमानेतदंतर्गतयोरवतारूपयोर्मत्स्यकूर्मयोर्दर्शनेनगम्योऽद्भुतरसो प्रेमभावातिशयपर्यवसन्नतयातद्विषयरति
पोषकत्वात्तदंगमितिभावः अयमिति भूरिश्रवसश्छिन्नंहस्तमालोक्यतद्वधूनामुक्तिः सद्भूर्वानुभूतोयंकरः यःकांचीसमाकर्षणशीलः नीवीवसनग्रंथिस्तस्या
विस्रंसनोमोचकइतिस्मर्यमाणयाशृंगारावस्थयाकरुणरसपरिपोषः कदेति निमिषमिवदिवसान्कदानेष्यामीत्यन्वयः कीदृशःकाश्यांगंगातीरेवसन् अ

अत्युच्चाइति स्फाराः विस्तीर्णाः प्रस्तौमि प्रसंजयामि भुवः पृथिव्याः इमां भुवं बिभ्रत् धारयमाणः त्वत्प्रत्यर्थीति हे वीर संत्रासतो भयाद्धेतोः सत्वरं गच्छतीः तव प्रत्यर्थिनः शत्रवो वसंधरेशा भूपास्ते पांतरुणीर्विलुंठितुं याताः किराता भिल्लास्तासां तरुणीनां पुनरलैरतिचपलैः स्तनैरतितरामतिशयेन लोलैश्च चलैरपांगैर्नेत्रप्रांतैश्च तैस्तिमिताः स्तब्धाः प्रोद्गतरोमांचाः विस्मृत उपक्रमो लुंठनरूपो यैस्तादृशास्तिष्ठंतीत्यन्वयः अत्र शृंगारस्यानन्तुरक्तराजवनिताविषयत्वाद

यथावा अत्युच्चाः परितः स्फुरंति गिरयः स्फारास्तथांभोधयस्तानेतानपि बिभ्रती किमपि न श्रांतासि तुभ्यं नमः आश्चर्येण मुहुर्मुहुः स्तुतिमितिप्रस्तौमि यावद्भुवस्तावद्बिभ्रदिमां स्मृतस्त्वद्भुजो वाचस्ततो मुद्रिताः अत्र प्रभुविषयरतिभावस्य वसुमतीविषयरतिभावोंग ऊर्जस्वियथा त्वत्प्रत्यर्थिवसंधरेश तरुणीः संत्रासतः सत्वरं यातीर्वीरविलुंठितुं सरभसं याताः किराता वने तिष्ठंतिस्तिमिताः प्ररूढपुलकास्ते विस्मृतोपक्रमास्तासां पुनरलैः स्तनैरतितरां लोलैरपांगैरपि अत्र प्रभुविषयरतिभावस्य शृंगाररसाभासोंग यथावा त्वयि लोचनगोचरं गते सफलं जन्म नृसिंह भूपते अजनिष्टममेति सादरं युधि विज्ञापयतिद्विषां गणः अत्र कवेः प्रभुविषयस्य रतिभावस्य तद्विषयद्विषद्गणरतिरूपो भावाभासोंगं समाहितं यथा पश्यामः किमियं प्रपद्यत इति स्थैर्यं मयालंबितं किं मां नालपतीत्ययं खलु शठः कोपस्तयाप्याश्रितः इत्यन्योन्यविलक्ष्यदृष्टिचतुरे तस्मिन्नवस्थांतरे सव्याजं हसितं मया धृतिहरो मुक्तस्तु बाष्पस्तया अत्र शृंगारस्य कोपशांतिरंगं ॥ अनौचित्येन प्रवृत्तिरित्याभासरूपत्वं त्वयीति अजनिष्ट अभूत युधि संग्रामे तद्विषयेति प्रभुविषयाद्विषद्गणस्य या रतिस्तद्रूप इत्यर्थः अत्र शत्रुविषयकत्वरूपेणानौचित्येन प्रवर्तितत्वाद्भावस्याभासत्वं पश्याम इति नायकस्य स्वमित्रं प्रति नापि कारुं तांतोक्तिः मयि तूष्णीं भूते किमियं प्रपद्यते गुरुते तत्पश्याम इत्यभिप्रायेण मया स्थैर्यं मौनरूपमालंबितमंगीकृतं पश्याम इति बहुवचनं सखीसमानाभिप्रायेण एवं तयापि अयं खलु शठो मां किमिति नालपति भाषत इति कोप आश्रितः इत्यन्योन्यपरस्परं विलक्ष्यालक्ष्यरहिता या दृष्टि

तदिति एधि भव निनीषामि नेतुमिच्छामि यतस्त्वमेव रूपेण समः समस्त्रियो नलः पत्रिणा हंसेन पादेन विलिख्य अदर्शि दर्शितः एकेति हे वीर क्षणमात्रेण युद्धप्रस्थानाद्भावी यो विरहक्लेशस्तदसहिष्णुं लोलाक्षीं दयितां पश्यतस्तथा प्रौढसंग्रामाडंबरमाकर्णयतश्च भवतः एकाकपोलस्य लीढाक् शीघ्रं पुलकैः कुसुमायुधस्य मदनस्येषुधिस्तरुणीमिव प्रव्यक्ता पुंखावलीशरपुंखपंक्तिर्यत्र तथाभूताः भूत् अन्याहितीयाजेतुर्जयशीलस्य मंगलपालिकामंगररूपा पालिकायाकुशकाशादिनिर्मिता उभयपार्श्वस्थस्तंभवृक्षादिषु बद्धामार्गे पालीति प्रसिद्धा तद्वदभूदित्यर्थः अत्र प्रेमपदोक्ताया रतेरपरिपुष्टत्वाद्भावरूपत्वं बोध्यं

भावोदयो यथा तद्यदि विश्रम्य दयालुरेधि मे दिनं निनीषामि भवद्विलोकिनी अदर्शिपादेन विलिख्य पत्रिणा तवैव रूपेण समः समस्त्रियः अत्र नलं प्रति दमयंत्या औत्सुक्यरूपभावस्योदयः शृंगाररसस्यांगं भावसंधिर्यथा एकाभूत्कुसुमायुधेषुधिरिव प्रव्यक्तपुंखावली जेतुर्मंगलपालिकेव पुलकैरन्या कपोलस्थली लोलाक्षीं क्षणमात्रभाविविरहक्लेशासहां पश्यतो द्रागाकर्णयतश्च वीर भवतः प्रौढाहवाडंबरं अत्र रमणीप्रेमरणोत्सुक्ययोः संधिः प्रभुविषयभावस्यांगं भावशबलं यथा क्वाकार्यं शशलक्ष्मणः क्वच कुलं भूयोपि दृश्येत सा दोषाणां प्रशमाय नः श्रुतमहो कोपेपि कांतं मुखं किं वक्ष्यंत्यपकल्मषाः कृतधियः स्वप्नेपि सा दुर्लभा चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योधरं धास्यति अ

त्र वितर्कौत्सुक्यमतिस्मरणशंकादैन्यधृतिचिंतानां शबलता विप्रलंभशृंगारस्यांगं प्रमाणालंकारे प्रत्यक्षं यथा कांतकांतवदनप्रतिबिंबे भग्नवालसहकारसुगंधौ ॥ क्वाकार्यमिति शुक्रकन्यां देवयानीं दृष्टवतो राज्ञो ययातेरियमुक्तिः अकार्यं ब्राह्मणकन्या सक्तिः शशलांछनस्य चंद्रस्य कुलं सोमवंशः अयं वितर्कः तदुपमेहैनं भूयोपीत्यौत्सुक्यं एवमग्रेपि श्रुतं शास्त्रश्रवणमिति मतिः अहो कोपेपीति स्मरणं अपगतकल्मषाः कृतेसु कृते धीर्येषां ते किं वदिष्यंतीति शंका स्वप्नेपीति दैन्यं हे चेतः स्वास्थ्यमुपैहीति धैर्यं कः खलु धन्यो युवा तरुणः अधरं धास्यति पास्यतीति चिंता विप्रलंभो वियोग इति पर्यायो

कु॰ नं॰ चं॰ टी॰ ९६

निर्व्वारनिर्वृत्तिंप्राप कथंभूते संक्रांतिप्रियमुखप्रतिबिंबे भग्नकोमलाम्रपल्लववत्सुगंधौ स्वादुनि आस्वाद्ये प्रकृष्टनादयुक्तभ्रमरयुते शीतस्पर्शेचेति अत्रें
द्रियतृप्त्या तज्जन्यप्रत्यक्षमलंकारः किमिति आरात् दूरे इतिक्षणंसंदिह्यकश्चिद्बकसहवासिनांकमलानांपरोक्षैरदृश्यैर्विब्बोकैर्मीनास्त्रियकथालापे
विब्बोकोनादरक्रियेत्युक्तलक्षणैर्हावविशेषैर्मुखमितिनिश्चिकायनिर्णीतवान् इतिप्रत्यक्षं यथेति यथाशब्दा अनुमानार्थाः यथाशब्दस्तुनिर्दिष्टस्तुल्य
योगानुमानयोरितिविश्वकोशात् तथाचचपलजलदरूपोधूमः व्योम्न आकाशस्यरंध्रमवकाशंयस्मात्स्थगयति तस्माच्चकीटमणयः खद्योताःस्फु

स्वादुनिप्रणदितालिनिशीतेनिर्वृवारमधुनींद्रियवर्गः यथावा किंतावत्सरसिसरोजमेतदारादाहोस्विन्मुखमवभासतेयुवत्याः ।
संशय्यक्षणमितिनिश्चिकायकश्चिद्विब्बोकैर्बकसहवासिनांपरोक्षैः पूर्वत्रप्रत्यक्षमात्रमत्रतुविशेषदर्शनजन्यसंशयोत्तरप्रत्यक्ष
मितिभेदः अनुमानंयथा यथारंध्रव्योम्नश्चलजलदधूमः स्थगयतिस्फुलिंगानांरूपंदधतिचयथाकीटमणयः यथाविद्युज्ज्वालो
ल्लसितपरिपिंगाश्चककुभस्तथामन्येलग्नःपथिकतरुखंडेस्मरदवः यथावा यत्रैतालहरीचलाचलदृशोव्यापारयंतिभ्रुवौयत्तत्रै
वपततिसततममीममेस्पृशोमार्गणाः तच्चक्रीकृतचापपुंखितशरप्रेंखत्करःक्रोधनोधावत्यग्रतएवशासनधरःसत्यंतदांःसांस्मरः

तरूणा॰

लिंगानांरूपंदधतिधारयंति यस्माच्चविद्युद्रूपाभिर्ज्वालाभिरुल्लसिताः प्रकाशीभूताः परितः पिंगवर्णाश्चककुभोदिशस्तस्मात्पथिकरूपाणांखंडेसमूहेस्मरल
क्षणोदवाग्निर्लग्नइतिमन्येइत्यन्वयः प्रयोगस्तुपथिकतरुखंडं स्मरदावानलवत् व्योमव्यापिजलदधूमवत्वादित्यादिर्बोध्यः यत्रैताइति लहरीवच्चलाचलाश्चंच
लादृशोयासांताएताः कामिन्यःयत्रजनेभ्रूलतांव्यापारयंतिप्रेरयंतितत्रैवभ्रूसंज्ञाविषयएव यद्यस्मादमीमर्मस्पर्शिनोबाणाःसंततंपतंति नतस्मान्मंडली
कृतेचापेपुंखितायोजितमुखायेशरास्तेषुप्रेंखन्चपलःकरोयस्यनादृशःक्रोधनःस्मरःशासनमाज्ञातद्धारकआसामग्रतोधावतीतिसत्यमित्यन्वयः ॥ राम॰ ९६

॥

अतिशयोक्तीति मार्गणत्वेनदृशामध्यवसानादितिभावः प्रयोगस्तु एताःचक्रीकृतचापंसदापुरोधावदाज्ञाकरमदनकाः मर्मभेदबाणपाताश्रयभ्रूसं
ज्ञास्थानकत्वादितिबोध्यः एवंनिलीयमानैरित्यत्रापिअयंकालः सूर्यास्तमयवान् पक्षिनिलीयमाननताद्याश्रयत्वादिति रविरस्तगमनवान् तादृशाको
लसंबंधित्वादितिवाप्रयोगोज्ञेयः सौमित्रेइति विरहातुरस्यरामस्यलक्ष्मणंप्रत्युक्तिः अत्राप्ययंचंद्रःकुरंगधारित्वादितिप्रयोगः इत्यनुमानं तामिति ता
रकाणांन्यासः संनिवेशः शकटस्याकारसंस्थानं आश्रितस्तांरोहिणींविजानीहीत्यतिदेशवाक्यार्थज्ञानमिहोपमानं इयंशकटाकारनक्षत्रव्यक्तिः रोहिणी

पूर्वंरूपकसंकीर्णमिदमतिशयोक्तिसंकीर्णमितिभेदः शुद्धानुमानंयथा विलीयमानैर्विहगैर्निमीलद्भिश्चपंकजैः विकसंत्याचमालत्या
गतोस्तंज्ञायतेरविः यथावा सौमित्रेननुसेव्यतांतरुतलंचंडांशुरुज्जृंभतेचंडांशोर्निशिकाकथारघुपतेचंद्रोयमुन्मीलति वत्सैतद्विदितंक
थंनुभवताधत्तेकुरंगंयतः क्वासिप्रेयसिहाकुरंगनयनेचंद्राननेजानकि उपमानंयथा तांरोहिणींविजानीहिज्योतिषामत्रमंडले यस्तं ॥
न्वितारकान्यासःशकटाकारमाश्रितः अत्रमन्मथमिवातिसुंदरंदानवारिमिवदिव्यतेजसं शैलराजमिवधैर्यशालिनंवेद्मिवेंकटपतिं ॥
महीपतिं पूर्वोदाहरणेउपमानभूतमतिदेशवाक्यंदर्शितं अत्रातिदेशवाक्यार्थसादृश्यप्रत्यक्षरूपमुपमानंफलेनसहदर्शितमितिविशे
षः शाब्दप्रमाणंयथा विवृण्वतादोषमपिच्युतात्मनात्वयैकमीशंप्रतिसाधुभाषितं यमामनंत्यात्मभुवोपिकारणंकथंसलक्ष्यप्रभवोभवि

पदवाच्येत्युपमितिंप्रतिकरणत्वात् अत्रेति अत्रसपुराजसुमध्येमन्मथमिवातिसुंदरंमहीपतिंवेंकटपतिसंज्ञंवेद्मीत्याद्यन्वयः दानवारिर्विष्णुः शैलराजं
हरं धैर्यशालिनंमदनशासकत्वात् प्रत्यक्षरूपमिति सादृश्यविशिष्टपिंडप्रत्यक्षस्यापिफलायोगव्यवच्छिन्नत्वेनकरणत्वादितिभावः फलेनउपमिति
रूपेण इत्युपमानं विवृण्वतेति कुमारसंभवेबटुवेषंहरंप्रतिपार्वत्याइयमुक्तिः वरदोषंप्रकाशयतापिस्खलितांतःकरणेनत्वयाईशंमहादेवंप्रतिएकं

यतोयमीशमात्मभुवोब्रह्मणोपिकारणमामनंति वेदाः सकथंलक्ष्यः प्रभवउत्पत्तिस्थानंयस्यताद्दृक् भविष्यतीत्यन्वयः विवक्षतेतिकश्चित्पाठः वक्तु
मिच्छति तदर्थः बलादिति नास्तिकोक्तिरियं हेजनाः पापानिबलात्कुरुततानि च पापानि वोयुष्माकं अकृतान्येव भवंतु यतोबलात्कारेणकृतान्सर्वानर्थान्मनु
रकृतानब्रवीदित्यन्वयः तद्दूषणपरेण सर्वाभिमतार्थदूषणपरेण आत्मनस्तुष्टिः प्रीतिर्वैकल्पिके विषयेगर्भाष्टमेःष्टमेवाब्देब्राह्मणस्योपनयनमित्यादि

अत्रशिवःपरमेष्ठिनोपिकारणमित्यत्रश्रुतिरूपंशब्दप्रमाणमुपन्यस्तं एवंस्मृतिपुराणागमलौकिकवाक्यरूपाण्यपिशब्दप्रमाणान्यु
दाहरणीयानि तत्रस्मृतिर्यथा बलात्कृतपापानिसंतुतान्यकृतानिवः सर्वान्बलकृतानर्थानकृतान्मनुरब्रवीत् पूर्वंश्रुतिरभिमता
र्थेप्रमाणत्वेनोपन्यस्ता इहतुस्मृतिरनभिमतार्थेतद्दूषणपरेणप्रमाणतयानीतेतिभेदः आचारात्मतुष्ट्योरपिमीमांसकोक्तधर्मप्र
माणयोर्वेदशब्दानुमापकतयाशब्दप्रमाणएवांतर्भावः तत्राचारप्रमाणंयथा महाजनाचारपरंपरेदृशीस्वनामनामाददतेनसाध
वः अतोभिधातुंन तदुत्सहेपुनर्जनःकिलाचारमुचंविगायति आत्मतुष्टिप्रमाणंयथा असंशयंक्षत्रपरिग्रहक्षमायदार्यमस्याम
भिलाषिमेमनः सतांहि संदेहपदेषुवस्तुषुप्रमाणमंतःकरणस्यवृत्तयः अत्रदुष्यंतेनात्मतुष्ट्याशकुंतलापरिग्रहस्यधर्मत्वं श्रुत्यनु
मतमनुमीयते एवंश्रुतिलिंगादिकमपिमीमांसोक्तप्रमाणंसंभवदिहोदाहर्तव्यं तत्रश्रुतिर्यथा त्वंहिनाम्नैववरदोनाधत्सेवरमुद्रि

प्रमाणमित्युक्तंमहाजनेति दमयंतींप्रतिनलस्योक्तिः नामवितर्के नाददतेनगृह्णंति आचारमुचं आचारत्यागिनं विगाय ॥ कां नहिश्रुतिप्रसिद्धार्थेलिं
ति निंदंति असंशयमिति क्षत्रेणक्षत्रियेणपरिग्रहेक्षमायोग्याः यतआर्यश्रेष्ठंममनोयस्यांशकुंतलायामभिलाषशीलं पदेषुविषयेषु त्वंहीति वरमुद्रि
कां वरदमुद्रां नाधत्से नधास्यसि श्रुतिर्वरदसंज्ञारूपालिंगंगमकंपक्षे श्रुत्यातृतीयादिरूपयापकर्षेणशीघ्रंसिद्धे अर्थे अंगांगिभावेसतिलिंगमर्थप्रकाश

यथैंद्र्यागार्हपत्यमुपतिष्ठतइतिश्रुत्यागार्हपत्योपस्थानेविनियुक्तस्यमंत्रस्यैंद्रप्रकाशनसामर्थ्यरूपेणलिंगेनैंद्रोपस्थानेविनियोगोनाद्रियतेइत्यर्थः करि
गिरीश्वरः कालहस्तीश्वरः विदितमिति इत्थंभूतःपरार्थैकप्रश्निकः अतइत्यस्यचेष्टारूपंप्रमाणांतरंनाशंकनीयमित्यग्रेतनेनान्वयः लोलेति गु
रूणांसंनिधावपिह्रीभ्यांनायकाभ्यांसमयोचितोविधिर्नोल्लंघितः यथालोलभ्रूलतयानायिकयाविपक्षस्यसपत्न्यादेर्दिशउपन्यासेतत्सकाशादागतोसी

अत्रकरिगिरीश्वरस्यवरदइत्यभिधानश्रुत्यासर्वाभिलषितदातृत्वंसमर्थितं लिंगंयथा विदितंवोयथास्वार्थानमेकाश्चित्प्रवृत्तयः न
नुमूर्तिभिरष्टाभिरित्थंभूतोस्मिसूचितः अत्रशिवस्यश्रुतिप्रसिद्धसर्वोपकारकपृथिव्याद्यष्टमूर्त्तिपरिग्रहलिंगेनतत्प्रवृत्तीनांलोकानुग्र
हैकप्रयोजनत्वंसमर्थितं लिंगस्यमूलभूतवेदानुमापकतयावैदिकशब्दप्रमाणएवांतर्भावः एवंलौकिकलिंगानामपिलौकिकशब्दो
न्नायकतयालौकिकशब्दप्रमाणएवांतर्भावः अतःलोलभ्रूलतेयाविपक्षदिगुपन्यासेविधूतंशिरस्तद्‌वृत्तांतपरीक्षणेकृतनमस्कारो
विलक्ष्यस्थितः ईषत्ताम्रकपोलकांतिनिमुखेदृष्ट्यानतःपाद योर्हृतस्त्रष्टोगुरुसंनिधावपिविधिर्द्वाभ्यांनकालोचितः इत्यादिचेष्टारूपं
प्रमाणांतरंनाशंकनीयं क्वचिच्छब्दप्रमाणकल्पनयाचमत्कारोयथा किमसुभिर्ग्लपितैर्जडमन्यसेमयिनिमज्जतुभीरुममामनः।
ममकिलश्रुतिमाहतदर्थिकांनलमुखेंदुपरांविबुधःस्मरः अत्रम्रियमाणानांमनश्चंद्रंप्रविशतीत्येतदर्थिकायाः श्रुतेर्नलमुखचंद्रविष
यत्वेकल्पितेतथाव्याख्यातृस्मरवाक्यंप्रमाणतयोपन्यस्तं ॥ निसूचनेकृते नायकेननेतिसूचनायशिरोविधूतंसंचालितं ततस्तद्वृत्तांतपरीक्षणे
नायिकयाकृतेसत्यकृतनमस्कारःविलक्ष्यएवस्थितः ततईषत्ताम्राकपोलकांतिर्यस्यतादृशेनायिकायामुखेकोपानिशायाज्जातेसतिनसाद्योदृष्टिपातेनै
वानतःप्रणतइतिकिमसुभिरिति व्याख्यातंप्राक् तथेति नलमुखचंद्रविषयत्वव्याख्यातुःस्मरस्येत्यर्थः तच्चासिद्धत्वात्कल्पितमितिभावः इतिशब्दः।

निर्येतुरिति अस्तीतिनिर्गंतुंशक्यमित्यन्वयः व्यक्तमिति हेतुस्तर्कः यद्व्यक्तंप्रकटंवलीयान्तदासाज्ञान्हवीजलधिंनापूरयत् अन्यथापूरणे सति अर्णः
समुद्रस्य जलं गंगौघैर्निर्भर्त्सितंतिरस्कृतंसत् शंभुकंठसमानवर्णनीलंकथंस्यादित्यन्वयः इत्यर्थापत्तिः स्फुटमिति हेतन्वि तर्कयंतस्तर्कशीला अपि
लोकास्तद्वलग्नंअनुपलभमाना अपश्यंतस्तवावलग्नं मध्यमसदितिस्फुटमेवनिश्चिन्वते कुलपर्वतश्रेष्ठयुग्मत्वेनाध्यवसितंस्तनद्वंद्वमाधारंविना
यदास्तेतत्विहमकरध्वजस्येंद्रजालंमायाचरितंप्रतीमइत्यन्वयः इत्यनुपलब्धिः अभूतेति ईश्वरंप्रतिभक्तस्योक्तिः पूर्वमभूतं अभूत॰र्वंताद्दशंम
प्रमा॰

अर्थापत्तिर्यथा निर्गंतुंशक्यमस्तीतिमध्यंतववनितंबिनि अन्यथानोपपद्येतपयोधरभरस्थितिः यथावा व्यक्तंबलीया[illegible]रभिहनरा ॥
गमादपूरयत्साजलधिंनजान्हवी गंगौघनिर्भर्त्सितशंभुकंधरासुवर्णमणेः कथमन्यथास्यात् अनुपलब्धिर्यथा स्फुट[illegible]सदव ॥
लग्नंतन्वि निश्चिन्वते तन्नदनुपलभमानास्तर्कयंतोपिलोकाः कुचगिरिवरयुग्मंयद्विनाधारमास्तेतदिहमकरकेतोरिंद्रजालंप्रती[illegible]
मः संभवोयथा अभूतपूर्वममभाविकिंवासर्वसहेमेसहजंहिदुःखं किंतुत्वदग्रेशरणागतानांपराभवोनाथनतेनुरूपः यथावा येना[illegible]
मकेचिदिहनः प्रथयंत्यवज्ञांजानंतितेकिमपितान्प्रतिनैषयत्नः उत्पत्स्यतेस्तिममकोपिसमानधर्माकालोह्ययंनिरवधिर्विपुलाच

मकिंवाभाविनकिंचित् सर्वंशीतातपादिद्वंद्वंसहे हियतोममसहजमेवदुःखमस्ति किंतुहेनाथतेतवशरणागतानांभक्तानांत्वदग्रेपराभवोनानुरूपोनो
चितइत्यन्वयः अथवातवनानुरूपइत्यन्वयः अत्रदुःखादेःसंभवाख्यप्रमाणसिद्धस्यकथनं येनामेति भवभूतेरुक्तिः नामेतिकुत्सनेनामप्रका
श्यसंभाव्यक्रोधापगमकुत्सनइत्यमरः किमपीतिकाकुः नकिमपीत्यर्थः एषःकाव्यनिर्माणरूपः ममकोपिसमानधर्मासदृशोयउत्पत्स्यते अस्ति
वातंप्रतियत्नः हियस्मान्निरवधिरयंकालःपृथ्वीचविपुलेतिक्रमेणयोज्यं अत्रकालोह्ययमित्यादिनासोपपत्तिकंसंभवाख्यप्रमाणमुपदर्शितम् ॥ 

भ्रातरिति पथिकंप्रतिग्रामस्थस्यप्रश्नःकुतइत्यनंतरमागतइतिशेषः नगरादित्युत्तरं वार्तेतिपुनःपूर्वस्यप्रश्नः वाढमि[illegible]दवर
तिपूर्वस्योक्तिः ब्रुवेत्यादिपांथवचनं सत्यंजीवतीतिपुनःपूर्वस्यप्रश्नः जीवतीत्यादिसर्वंपांथवचनं इतिसंभवः अनिर्दिष्ट[illegible]पमाभ्यामसपर्णात्कथंतयोस्तदं
न्तः प्रवक्तायस्येत्यर्थः एवंचैतदेवैतिह्यलक्षणमितिदर्शितं इत्यलंकारचंद्रिकायांप्रमाणालंकारप्रकरणंसम्पूर्णम् ॥ [illegible]यस्यार्थद्वयस्याभेदाध्यवसाने
यथावा भ्रातःपांथकुतोभवान्नगरतोवार्तानवावर्त्ततेवाढंब्रूहियुवापयोदसमयेस्मत्काप्रियांजीवति सत्यंजीवा[illegible]त्याशयेनाह यद्वेति तनुदी
र्त्तोमयापिश्रुताविस्तीर्णापृथिवीजनोपिविविधः किंकिंनसंभाव्यते अत्राद्योदाहरणे अभूतपूर्वममभाविकिंवेतिसंभव[illegible]द्यप्यत्रोपमाभ्यांशशि
तः द्वितीयोदाहरणेसंभवोपपादककालानंत्यादिकमपिदर्शितं तृतीयोदाहरणेतुसंभवोपिकंठोक्तइतिभेदः एतिज्ञासमासोक्त्योरपेक्षितं उ
ये यैलौकिकीप्रतिभातिमे एतिजीवंतमानंदोनरंवर्षशतादपि अत्रलौकिकीगाथेयमित्यनिर्दिष्टप्रवक्तृकप्रवादापिवाक्यात्कोपमायामिव
तेषामलंकाराणांयथासंभवंक्वचिन्मेलनेलौकिकालंकाराणांमेलनइवचारुत्वातिशयोपलंभान्नरसिंहद्वयस्यसमासोक्तोपमायासरोज
र्णयः क्रियते तत्रतिलतंडुलन्यायेनस्फुटावगम्यभेदालंकारमेलनेसंसृष्टिः नीरक्षीरन्यायेनास्फुटभेदालंण्यसंपाद्यतयोरुत्प्रेक्षासमासोक्त्यो
मप्राधान्येनसंदेहेनएकवाचकानुप्रवेशेनचतुर्विधः एवंनृसिंहाकाराःपंचालंकाराः तत्रसंसृष्टि[illegible]चांगु लीकेशसंचपलोचनानां चतनुदी
संभृतशोभया चलितयाविदधेकलमेखलाकलकलोलकलोलदृशान्यया ॥ भ्यांद्वयोस्तदा[illegible]नकरूपेणाभेदोप्यस्ति सचात्रविवक्षित
म्यमानोभेदोयेषामितिविग्रह [illegible] शोःवस्थितिः एतत्सर्वमुदाहरणेव्य[illegible]थासंख्यक्रमपरित्यागः तथाचांगुलिमरीच्योस्तनुल
तयाञ्चलितयाकलस्वरोमेखलायाः काञ्च्याः कलकलः कोला[illegible]लुस्वादिकंतेनेत्यर्थः एनच्चसादृश्यमतिरिक्तमित्यभिप्रायेणसिद्धांतादिति तदुक्तम्

